संस्कृतभाषायां तु प्रायो बुद्धिपूर्वकं निष्पाद्यन्ते श्लिष्टाः शब्दाः । एवं ऋग्वेदसंहिताभाषाया आद्या दशा ऋचां द्व्यर्थतासमर्थनाय अनुकूलाऽभूदिति बोध्यम् ॥

सैषा किल तेषां ऋषीणां ऋग्भाषायाः प्रक्रिया । यया मन्त्राणां अन्तर्बहिश्चार्थः शक्योऽभवदुपपादयितुम् । यथा स्थूलो बाह्यश्चार्थः प्राकृतान् पदार्थान् आवेदयति, तथा आन्तरः सूक्ष्मोऽर्थः आन्तरङ्गिकान् आध्यात्मिकान् प्रकृतिगतोत्तमांश-सम्बद्धान् गूढभावान् लक्षयति । यतो बाह्या सर्वाऽपि सत्ता आन्तरसत्तायाः सङ्केतभूतेति प्राचां आसीद् दृष्टिरिति पूर्वोक्त मवधेयम् । नेयं केवलं वेदर्षीणामेव बहिर्भुवने सङ्केतबुद्धिः आसीत्, अपि तु अन्यत्रापि भूमण्डले मानुष्यकस्य आदिमायां दशायां परिदृश्यमाने स्थूले जगति सङ्केतदृष्टिरासीद् इत्यवगन्तव्यम् । यदि पुरावृत्तसंशोधनमतबलेन पर्यालोचयेम तदा निस्संशयमिद मवगतं स्यात् । अधुनातन-विज्ञानाभ्युदयावस्थापेक्षया अपक्वा प्राकृतदशा भवतु नाम सा आद्यानां मानुषाणां, भवन्तु वा ते यथाजातावस्थायां निष्ठिताः, भवन्तु वा पुनस्ते वाणिज्यव्यवसायादिवार्तां प्राप्ता अप्राप्ता वा – इदं तु सर्वत्र तेषु पश्यामः । तस्यां आदिमावस्थायां मानवस्य सङ्घस्य गाढा दैवचिन्ता, सामयिके धर्मे भावनाबलं अतुल्यं, देवतास्तिक्यव्यापारेषु कश्चन अशिक्षितः सहजबोधः, भावनावैशाल्यसनाथं अन्तस्संवेदनं वा परिदृश्यते । यदा कालपरिपाकवशान्मानुष्यके तर्कनिविष्टा मतिः विचारशीलता धीव्यवसायश्च पदं लभन्ते, तदा बौद्धं व्यक्तिस्वातन्त्र्ययुगं प्रवर्तते, निवर्तते च अन्तस्संवेदन-अशिक्षितबोधभावनाप्रधानं साङ्केतिकं युगम् । तच्च निवृत्तमाद्यं प्राकृतं वा युगं साङ्केतिकं ब्रूमः । यतः समस्तं बाह्यं भुवनं पृथक् कृत्स्नशश्च अन्तरस्य प्रपञ्चस्य सङ्केतभूतं विलोकितम् । नेह सङ्केतपदं शास्त्रमर्यादानुसारेण शब्दार्थसाक्षात्सम्बन्धरूप-वृत्तिपदवेदनीयं ईश्वरेच्छापरं वा प्रयुज्यते । सामान्यार्थे लोकव्यवहारसिद्धे प्रायशो गौण्या वृत्त्या लभ्ये लक्ष्यलक्षणसम्बन्धे प्रयुज्यते । यथा आयुर्घृत मित्यादौ घृतं बल्यमिति विवक्षा पूर्वेषाम्, तथा अश्वादयः बलादीनां लक्षका भवन्तीति सङ्केतार्थविवरणे स्पष्टीभविष्यति । तस्मात् आदिपुरुषाणां सर्वाणि वस्तूनि सर्वं च जगत् (सर्वे तेषामाचाराः, सामायिकधर्मः, सामुदायिकोत्सवाश्च) सङ्केतभूतानी त्युक्तेरय माशयः । यो यः पदार्थः स्थूलरूपतया बहिरवस्थितः तस्य तस्य सदृशः प्रतिरूपकोऽन्तरर्थो वर्तते, यस्यैव सूक्ष्मस्य बाह्यं स्थूलं सङ्केतपदवाच्यं ब्रूमः । सङ्केतार्थ-

निर्णयस्तु भूयो वैदिकपदानां यौगिकत्वादेव लभ्यते । क्वचिद्रौण्या वृत्त्या, क्वचिन्मन्त्रेषु मन्त्रकृतां देवतादिदर्शनविधानिर्वर्णनाद् अवगतैर्बिम्बविशेषैश्चेत्यलम् । सङ्केतव्यवस्थां अधिकृत्य पुरस्ताद्द्वितीयखण्डे विचारः प्रसङ्क्ष्यते ॥

बहिः सर्वं मन्तरर्थस्य सङ्केतभूत मित्युक्तम् । तस्माद् बहिर्यागोऽपि सङ्केतो भवति अन्तर्यजनस्य । तर्हि प्रथमं यागस्य सङ्केतार्थं प्रतिपाद्य ततः परं साङ्केतिक समयानुसारेण के वा लोकाः कानि स्वरूपाणि देवानां व्यापाराश्च इत्यादीनि विचारयामः । चत्वारो भवन्ति यागस्य मुख्यांशाः, यजमानः, ऋत्विजः, द्रव्यत्यागः, फलानि यजनस्य चेति । तत्र यजमानो यजनाय प्रवृत्तः मूर्तिमान् जीव आत्मा । ऋत्विजो याज्ञिकानि कर्माणि यथास्थानं यथाकालं निर्वहन्तो यज्ञस्य प्रारम्भात् समाप्तिं यावत् यजमानं उपकुर्वन्ति । ऋतौ काले यजन्ते यष्टारः इत्यवयवार्थ उपपद्यते । होत्रध्वर्यूद्गातृब्रह्माख्याः चत्वार एषां गणाः सोमयागे । एकैकस्मिन् चत्वार ऋत्विजस्तस्मात् ते षोडश भवन्ति सर्वेऽप्याहृत्य । अस्य विस्तरस्य इह अनुपयोगात्तेषां प्रधानर्लिङ्नाम्नां पदार्थोल्लेखनद्वारेण तद्व्यापारान् गूढार्थपक्षे व्याहरिष्यामः । चतुर्णां गणाना माद्यो होतृगणः । ऋचः शंसति होता । ऋग्भिराह्वानं देवानां अनेन निर्वर्त्यते । तस्मादाह्वाता होतेत्यनर्थान्तरम् । दैवीं वाचं **आविष्कुर्वाणानां** ऋचां उच्चारणात् देवानुपस्थापयति सः । अन्तर्यजने सुगमोऽयं भावः । तादृशो होता देव एव न मानुषः पुरोहितः । देवमेव यथार्थं पुरोहितं मन्यन्ते ब्राह्मणानि । त्रीन् भूरादिलोकान् पुरोधातॄन् अग्निवाय्वादित्यान् पुरोहितांश्च याज्ञिकाः पठन्ति । तथा च ऐतरेयिणः समामनन्ति— "यो ह वै त्रीन् पुरोहितान् त्रीन् पुरोधातॄन् वेद स ब्राह्मणः पुरोहितः" (ऐ. ब्रा. ८-२७) देवानामेव वस्तुतः पौरोहित्यमिति यो जानाति तस्यैव मानुषस्य पौरोहित्याधिकार इति भावः । एवं कर्मतन्त्रपरेषु ब्राह्मणेषु तत्र तत्र ज्ञानैकगम्यानि रहस्यानि निक्षिप्तानीति निदर्शनमात्रमत्र प्रसक्तिवशात् सूचितम् । अत एव अग्निं "पुरोहितं देवं ऋत्विजं होतारम्" गायति आदिवेदस्यादिमा माधुच्छन्दसी मन्त्रदृष्टिः । स ह्यग्निर्देवानां दूतः मर्त्येष्वमर्त्य इति शतकृत्वो वेदे गीतः ॥

अध्वर्युर्द्वितीयः यजुर्वेदाधारः, स हि यजुर्भिर्याजयति यज्ञतन्त्रानुसारेणाध्यान् ऋत्विजो नयति, यजनक्रियानिर्वाही क्रियादक्षः तदधीनमेव सर्वथा यज्ञनिर्वर्तनम् ।

अयमपि देवो मातरिश्वा वायुर्येन जगत्प्राणेन सर्वक्रियाणां सम्भवः। अन्तरर्थः सुगमः प्राणदेवपरः, सर्वदेवताकार्यानुकूलक्रियां अन्तर्यजने साधयत्यन्त रध्वर्युर्वायुः। यद्यपि अध्वरशब्दो यज्ञपर्यायत्वेन प्रसिद्धः, तथाऽपि अवयवार्थमजहत् अध्वानं राति दत्ते इति यात्रारूपतयाऽध्वरो वर्ण्यते वेदे। तथाविधमध्वरं गच्छति कामयते वा अध्वर्युः क्रियादक्षः। सर्वेषु देवेषु ऋत्विग्रूपेष्वयमेव अध्वरपद-वाच्ययात्रायां सर्वकार्यनिर्वाहकः॥

उद्गाता– साम गायति। अयं देवान् आनन्दयति साम्नां गानेन। गूढार्थपक्षे, अयं आदित्यो देवः उद्गीथेन सर्वदेवप्रीणनेन गानेन स्वरन् यजमानस्य विविधसङ्कटापायदोषादीन् निवारयन् तं स्वस्थं विधाय समुन्नयत्यमृतं सत्यं आनन्दम्। अन्ते ब्रह्मा– स साक्षी सर्वस्यापि यज्ञकर्म-कलापस्य, ददात्यनुज्ञां कर्मणां प्रवर्तने, यथाकालं अनुज्ञाक्षरं उच्चरति स्थाने, न स्थानाच्चलति, मौन मास्थाय आकर्मपरिसमाप्ति मन्त्रतन्त्र-क्रियालोप-न्यूनातिरिक्तेभ्यो रक्षति याज्ञिकं कर्मेति ब्रह्मार्त्विज्य-संक्षेपः। आन्तरस्तु भावः सुघटः। निरावरणः स्पष्टश्च सङ्केतार्थः। अयं च देवो मन्त्राणां अभिमानी, मन्त्राश्च वेदे ब्रह्माणीति प्रसिद्धिः। अत एव ब्रह्मणस्पतिर्मन्त्राधिदेवता। छन्दसां मन्त्राणां मूलप्रकृतिः प्रणवः अनुज्ञाक्षरपदवेदनीयः ओङ्कारपदवाच्यः स एव सर्वमन्त्रप्रादुर्भाव-मूलस्थानभूतां आद्यां वाचं आविष्करोति। तस्मात्तदायत्त-समस्त-दैवतमन्त्राधिदेवता ब्रह्मणस्पतिरेव आदौ अन्ते च सर्वत्र परमेण मौनेन यजमानस्यान्तर्यजनं एकेन अक्षरेणानुगृह्णातीत्यवगन्तव्यम्॥

अथ द्रव्याण्यपि सङ्केतभूतानि ग्राह्याणि। यथा ऋत्विङ्नाम-निर्वचनादिभिः तेषा मन्तर्यजने देवतादि-सङ्केतार्थो ज्ञायते, तथा कर्मणि देवेभ्योऽर्प्यमाणानि द्रव्याणि यजमान-स्वभूतानि घृतादीन्यपि सङ्केतात्मकानि अवयवार्थानुगमाद् अन्वेतव्यानि। गौः इति धेनुः रश्मिनाम च भवति। तस्माद्गव्यं कान्तिमत् प्रकाशं ज्ञानलक्षणं बोध्यम्। गव्य-घृत-हविरादय एवमेव देवार्थं दीयमानाः यजमान-स्वभूताः ग्राह्याः। ऊष्म-दीप्त्यर्थात्समानधातोर्निष्पन्नानि घृतधर्मघृणिपदानि। "घृतम्" अन्तःप्रसादरूपः प्रकाशः। दाने अदने च वर्तते जुहोतिर्धातुः। यद्दीयते यजमानेन देवेभ्यः, यच्च देवानां आस्यभूतेन मर्त्येष्वस्मासु प्रथमजेनामर्त्येन अग्निना अद्यते, तद्धविः स हवः। एवमन्यानि

द्रव्याणि बाह्यानि यजमानोपार्जित-ज्ञान-क्रिया-सुख-भोग-साधनानां सङ्केत-भूतानि देवेभ्यो दीयन्ते ॥

एवं फलान्यपि सङ्केतार्थ-वेदनीयानि भवन्ति । कर्मफलात्मकः गवाश्वलाभः शश्वत् कीर्त्यते । गौः प्रकाशलक्षणं ज्ञानं, अश्वश्च बलोपलक्षणं क्रियाशक्तिसामर्थ्यं सङ्केतयतः । अन्यानि वैदिकपदानि सङ्केतार्थेषु वर्तन्ते । यज्ञः सर्वोऽपि साङ्गः सङ्केतार्थेषु ग्राह्य इत्यावेदयितुं उक्तान्युदाहरणान्यलम् । सूक्तमन्त्रस्थपदानां यौगिकत्वं चैतन्मतं पोषयतीत्यवधेयम् । अन्यानि कानिचित्पदानि अन्तःकरणसम्बन्धीन्येव प्रथन्ते । कर्मपरतया मन्त्राणां व्याख्याने बहुत्र बाह्य-स्थूलार्थोपपत्तिर्दुर्घटा । अन्तरर्थे तु सर्वत्र सुतरां उपपत्तिरिति पुरस्ता दन्यत्रोदाहरिष्यामः ॥

वेदसङ्केतार्थ-पक्षोपन्यासः समासेनाधियज्ञं समाप्तः । अथाधिलोकं पश्यामः । तत्र प्रथमं त्रयो लोकाः भूर्भुवस्सुवरिति व्याहृतित्रयेणाभिहिताः । भूरिति पृथ्वी, भुव इत्यन्तरिक्षम् , सुव इति द्यौः स्वर्गापरपर्याया । तदूर्ध्वं मह इति चतुर्थीं व्याहृतिं बृहद्दिवमामनन्ति । ततः परमपि जन-तपः-सत्याख्यास्तिस्रो व्याहृतीरकृतक-लोकत्रयाभिधायिनीः कीर्तयन्ति । यद्यपि वेदे सप्ततत्त्वात्मकं सत्त्वं सद्वस्तु वा, सप्ततत्त्वात्मिका ब्रह्माण्डव्यवस्थेति सप्तधा सत्तां चित्तिं शक्तिं चिच्छक्तिं वा लोकान् लोकाध्यक्षान् वा सप्तसानवः सप्तसिन्धवः सप्तस्वसारः सप्तरश्मयः सप्तर्षय इत्यामनन्ति, तथाऽपि प्रथमं भूरादिव्याहृतित्रयलक्षितं लोकत्रयं तत्सम्बन्धिनीर्देवताश्च शश्वत् कीर्तयन्ति । यतस्त्रय इमे लोकाः पृथिव्यादय एव प्राधान्येनास्माकं सम्बन्धिनः, ऊर्ध्व-लोकापेक्षया सन्निकृष्टाश्च भवन्ति । इदं च त्रैलोक्यं अपरार्धमिति व्यपदेशं भजते । अत एव नेदिष्ठं भुवोऽधिष्ठातारं अग्निं भूयस्य ऋचः स्तुवन्ति । सर्वेषामस्य त्रैलोक्यस्य देवानां राजानमिन्द्रं भूयिष्ठा ऋचः कीर्तयन्ति । एतेभ्यो लोकेभ्यो देवेभ्यश्च परस्तात् परमे परार्धे भ्राजमानः सूर्य एक एव सर्वेषां देवानां लोकानां च देवः वेदे प्रतिपादितः, यमधिगन्तुं सर्वाणि तपांसि तप्यन्ते, यज्ञाश्च इज्यन्ते । तत्तादृशं भगवन्तं सवितारं स्तुवन्त्य ऋचः स्वल्पसङ्ख्याका एव भवन्ति । अस्मदीयत्रैलोक्यदेवा एव प्राधान्येन यज्ञभागस्वामिनो भवन्ति ॥

आर्षोऽयं त्रैलोक्यविभागः भूमिरन्तरिक्षं द्यौरिति । इदं च बाह्यं भुवनत्रयं तत्सदृशस्य अन्तरस्य त्रिकस्य सङ्केतभूतं अवगन्तव्यम् । तत्र भूरित्ययं लोकः भौतिक इन्द्रियार्थः

अन्नमयाख्य-स्थूलजाग्रत्प्रज्ञाविशेषभूमेः सङ्केतो भवति । बहिर्भुवनानपेक्षस्य स्वतन्त्रतयाऽवस्थितस्य शुद्धमनस्तत्त्वप्रधानस्य प्रज्ञाविशेषस्य द्यौः सङ्केतो भवति । उभयोर्द्यावापृथिव्योः मध्यवर्ती उभयोरन्नमय-मनोमय-प्रज्ञाविशेषयोः सन्धिभूतः प्राणः प्रज्ञागर्भितशक्तिविशेषः भुव इत्यन्तरिक्षेण सङ्केतितो भवति । एवं अन्न-प्राण-मनस्तत्त्वानां विलसितान्येव अध्यण्डं अधिपिण्डं च भूर्भुवस्सुवरिति व्याहृतित्रय-प्रतिपादितं त्रैलोक्यं इति लोकसङ्केतसार-व्याहार इत्यलम् ॥

अथ देवानधिकृत्य, विश्वस्यां प्रकृतौ अस्मास्वन्तर्वा बहिर्ब्रह्माण्डे वा यानि शक्ति-विलसितानि सृष्ट्यादिकार्यनिर्वाहीनि लक्ष्यन्ते तानि सर्वाणि देवानां वर्तनानि भवन्ति । अर्थात् देवास्सर्गे शक्तिविशेषा इत्युक्तं भवति । स्थूलपक्षे इन्द्रः पर्जन्यात्मा देवः, सखायस्तस्य मरुतो वायव्याः, सूर्यस्तेजःपिण्डमण्डलात्मा, उषः अरुणोदयस्वरूपिणी, अग्निरूष्म-तेजस्तत्त्वात्मको भूतेषु पञ्चसु तृतीय इति सामान्यप्रत्ययः । अन्येषामपि देवानां स्वरूपाणि सन्दिग्धान्यपि क्वचित् कीर्त्यन्ते । यथा मित्रावरुणयो रहोरात्रात्मकत्वम् । अन्तरर्थस्वीकारे त्वेतेषां देवानां अध्यात्मवृत्तिविशेषप्रेरण-पोषण-प्रकाशनादयो व्यापारास्तत्तन्नाम-निर्वचनादवगन्तव्याः । अपि च तत्र तत्र सूक्तेषूल्लिखितानां तत्तद्-वृत्तान्वाख्यानानां रूपक-दृष्टान्तात्मकतया लाक्षणिके वर्णने परीक्षिते, तेषां यथार्थ-स्वरूपव्यापाराः स्पष्टाः स्युः । देवाः सर्वेऽपि परस्यैकस्य देवस्य नामानीति निर्विवादम् । अपि तु न ते केवलं नामानि, शक्तयो मूर्तयश्च भवन्ति परमस्य देवस्य । अग्निर्नाम जडधियः सामान्यजनस्य केवलं भूताग्निः, तेजस्तत्त्वात्मकं घर्मधर्मं प्राकृतं द्रव्यं स्यात् । अथवा याज्ञिकाग्निः अमानुषः पुरुषः कश्चन यजमानस्याभीष्टदायिनां एकः, यस्यानुग्रहाद्गावः, अश्वाः, प्रजाः, अन्नं, यशः, कान्ता, कनकं एवमन्यानि च भोग्यानि लभ्यन्ते । अन्तर्यजनदीक्षितस्य गूढार्थवेदिनस्तु अग्नेर्नामनिर्वचनानुसारेण दीप्तिशक्त्यात्मिका देवतेति विदितं भवति । देवानां प्रथमोऽय मस्मासु प्रबुद्धः । तस्य व्यक्ति-स्वरूपं मन्त्रवर्णेभ्योऽवगम्यते । सोऽग्रे तिष्ठन् नयत्यस्मान् पुरस्तात् पुरोहितः । स दूतो देवानां येन पुरो गच्छता अध्वगामिना वयं देवान् यथास्थान मधिगच्छेम । स मुखं देवानाम् । मुखमेव प्रथमं दृश्यते, अन्यानि पुनः परस्यैकस्याङ्गभूतानि दैवतानि पर-स्तात् स्थितानि । तस्मादग्निमुखेनैव विश्वदैवतसम्प्राप्तिर्भवति । स आस्यं भवति देवानां,

अस्माभिरर्प्यमाणं सर्वं तेन मुखेन देवाः स्वीकुर्वते । स कविक्रतुरस्मासु हृदये । साध्यवसायप्रज्ञारूपोऽयं हृदि स्थितोऽस्मासु । स साक्षात् सर्वदैवतप्रतिनिधिः हृद्गुहायां निहितः । यदा सुप्तोत्थितो ज्वलत्यूर्ध्वरेताः तदा यजमानस्य कर्तव्यभारं स्वयं परिगृह्य तस्य सर्वस्वं देवेभ्यो दीयमानं यथाभागं देवान् प्रापयति । इदं चावधेयम् । सर्वं अध्यण्डं अधिपिण्डं वा देवतायत्तम्, देवतास्वाम्यम् । अस्मासु प्रत्येकं सङ्कीर्णं च वर्तमानाः मनः-प्राण-अन्नाद्यास्तदवान्तरभेदाश्चांशाः ब्रह्माण्डोपादानाः ब्रह्माण्डान्तर्भूताः ब्रह्माण्डाधिकारिकेषु देवेष्वधीना इति स्मर्तव्यम् । तस्माद्यजमानेनार्प्यमाणं सर्वं ज्ञान-क्रियादाक्ष्य-भोगसाधनादिकं वस्तुतो देवस्वतयैव देवेभ्यो दीयते, यन्न कोऽप्यंशः यजमानस्य वस्तुतः स्वीयो भवति, विश्वस्यापि देवस्वत्वात् । तस्मादन्ते यजमानः स्वात्मानं एव अर्पयति । ब्राह्मणान्यपि क्वचिद्यूपं यजमानं आह । आलभ्यः पशुरपि यजमान-प्रत्याम्नाय इत्यामनन्ति । यजनेन सर्वाभ्यो देवताभ्य आत्मानमेव निष्क्रीणीते यजमान इत्येवमर्थानि वाक्यानि ब्राह्मणेषु द्रष्टव्यानि । तथा चाहुरैतरेयिणः "यजमानो वै यूपः । यजमानः प्रस्तरः । अग्निर्वै देवयोनिः । सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय, हिरण्यशरीरः ऊर्ध्वः स्वर्गं लोकमेष्यति "॥ (२. ६. ३.) कौषीतकिनश्चामनन्ति "अग्नी-षोमयोर्वा एष आस्यमापद्यते यो दीक्षते तद्यदुपवसथे अग्नीषोमीयं पशुमालभते आत्म-निष्क्रयणो हैवास्य तेन आत्मानं निष्क्रीयानृणो भूत्वाऽथ यजते" (१०. ३.) इति । तथैव ऐतरेयब्राह्मणेऽपि "सर्वाभ्यो वा एष देवताभ्य आत्मानमालभते यो दीक्षते, अग्निः सर्वाः देवताः । स यदग्नीषोमीयं पशुमालभते सर्वाभ्य एव देवताभ्यः यजमानः आत्मानं निष्क्रीणीते" (२. ६. ३.) इति पठ्यते ॥

स एषोऽग्निर्विश्वेषां देवानां दूतो यथास्वं यज्ञभागान् भुञ्जतां मुखं भवति । स यजमाने प्रथमं प्राप्तजन्मा यज्ञे पुरोहितोऽग्रणीः, सर्वेश्वरस्य सनातनकुमारः, कामो हृच्छयः सर्वभूतानां ज्वलन्नूर्ध्वं आरोहत्यारोहयति च यजमानम् । एवमिन्द्रो मित्रो वरुणः सोमोऽश्विनौ मरुत ऋभवः अन्ये च देवा यथास्थानं यथाधिकारं स्वानि कार्याणि निर्वहन्ति सवितुः परस्यैकस्य देवस्य । यस्यैतानि दैवतानि बहूनि नामानि व्यक्तान्यङ्ग-भूतानि मूर्तान्यमूर्तस्य । इह कानिचिदेषां निदर्शनार्थमुदाहरामः । यदि हृदि कवि-क्रतुरस्मास्वग्निः सप्तजिह्वः सप्तधामाधिगामी मर्त्येष्वमर्त्यः सततगमनशीलः अतिथिः

अस्माद्भूधाम्नः प्रस्थाय दिवमारोहति, दिवस्पतिरिन्द्रोऽपि बृहद्बलं देवानां दिव्यमनोमयाधिराजः विद्युद्भिरवरोहन् अभीष्टजीवनदानैः पर्जन्यात्मना वर्षन् वृषा जीवन-प्रकाशावरण-प्रतिबन्धान् वृत्रादीनसुरान् निहत्य आवृतानि बन्धितानि च सत्यानि निरावरणानि निर्मुक्तानि विधाय परं सत्यं भगवन्तं सूर्यं साक्षात्कारयति ॥

सोमो रसाधिदेवता अमृतस्यानन्दस्य अधिष्ठाता । सर्गे सर्वेषामपि भूतानां यः सारांशः रसः आनन्दमयः तं अमृतमादाय देवाः अमृतत्वं भजन्ते । तस्माद् अमृतान्धसां देवानां आहाराय स्वीयं सर्वज्ञान-क्रियाबल-भोगसाधनं सारांशं सोम-पदसङ्केतितं रसं यजमानः सुनोत्यर्पयति । तच्चामृतमानन्दं सोमपदवाच्यं अन्नं भवति देवानाम् । अन्नादस्तु सर्वदेवास्यभूतोऽग्निरिति बोध्यम् । एवमुपपद्यते च ब्राह्मणम्—'सोमो वा अन्नं अग्निरन्नादः' इति । "अग्निः सर्वा देवताः सोमः सर्वा देवताः" इत्येवं-जातीयकस्य वाक्यस्यापि तात्पर्यं गूढार्थपक्षे सुगमम् । एवमन्येऽपि देवाः वरुणः सर्वा-वरणो विभुः समग्रपावनताविधायकः पापापनोदनः । मित्रः प्रेमसौहार्दभरितया भ्राज-मानया शक्त्या बाह्याभ्यन्तरानुभवप्रेरणक्रियादिवृत्तीनां संवादस्य निष्पादयिता, सम्मदस्य विधाता देवः । अन्यानि च तत्र तत्र यथावसरं देवानां स्वरूपाणि विचारयिष्यामः । न केवलं पुमांसो देवाः स्त्रियश्च देव्यो गीयन्ते वेदे । अग्नीन्द्रवरुणादीनां शक्तयः अग्नायी इन्द्राणी वरुणानीत्यादयो देव्यः । स्वतन्त्रतया स्त्री-देवताश्च काश्चन गीयन्ते । यथा वा, अदितिः अखण्डस्वरूपिणी सर्वभूत-प्रकृतिर्माता देवानां आद्या देवी । इळा मही सरस्वती सरमा इत्याद्याश्च लक्षणीयाः । पुंसां स्त्रीणां च देवतानामेष विशेषः अवधेयः । कार्याणां कारयितारश्चोदयितारो वा पुमांसो देवाः । कार्याणां निर्वाहिकाः स्त्री-देवता इति सङ्ग्रहः ॥

तदत्र अधियज्ञं अधिलोकं अधिदैवतं च सङ्केतमर्यादावलम्बिनं वेदगुप्तार्थसिद्धान्तं सङ्क्षेपेण व्याहार्ष्म । यदिद मत्यल्पं दिङ्मात्रप्रदर्शनमेव भवति, तदपि न्यूनं स्याद्यदीह सारतो वा नोदाहरेम मुख्यानि वाक्यानि श्रीचरणानां वेदरहस्यार्थदर्शिनां इति तानि इमान्यनूदितानि भवन्ति—

'अथ क इह वेदार्थसारांशः गुप्तार्थदर्शनाल्लभ्यते? उच्यते । अयं प्रथमो मुख्यश्च भवति । सत्यस्यामृतस्य ज्योतिषोऽधिगमायोद्यम एव मुख्योद्देशः, यस्यानुरोधेनैव सर्वे

वेदार्था उपलभ्यन्ते । अस्त्येकं सत्यं, तत् प्रत्यक्षभूताज्जगदात्मकसत्यात् गहनतरं परतरम् । अस्त्येकं ज्योतिः, तच्च मानुषज्ञानप्रकाशान्महीयो वरीयश्च असामान्याद् अमानुषाद् दर्शनश्रवणविशेषाल्लभ्यम् । अस्ति च अमृतं, तदुद्दिश्यमानुषो जीव उद्गच्छेत् । तत्सम्प्राप्तये अध्वानं प्रविशेम, ऋतस्यामृतस्य सम्पर्कं साधयेम । सत्ये नव्यं जन्म सम्प्राप्य वर्धमानास्सन्तः सत्यलोकं आत्मना अधिरुह्य तत्र जीवेम । तादृशी सिद्धिरेव मर्त्यत्वादमृतत्वप्राप्तिः परदैवतसायुज्यं च भवति ॥

अथ द्वितीयो गुप्तवेदिनां सिद्धान्तः । अनृतस्य भूरेः सम्मिश्रणादिदं जगत् अवरं सत्यम् । अन्यदस्ति परं सत्यं ऋतस्य सदनं 'सत्यं ऋतं बृहत्' इति मन्त्रवर्णोपदिष्टम् । तत्र सत्यज्ञानं 'ऋतचित्' इति कीर्त्यते । अन्ये च सन्ति लोकाः । परमो लोकस्तु सत्यज्योतिर्लोकः । अयमेव स्वराख्यः बृहद्द्यौरित्याम्नायते । तस्मादन्वेष्टव्यो बृहद्दिवः पन्थाः ॥

अथायं तृतीयः सिद्धान्तसारः । लोकयात्राया मस्माकं जीवितं देवासुरयोर्युद्धरङ्गम् । देवाश्च सत्यस्य ज्योतिषोऽमृतस्य विभवाः, असुरास्तु तद्विरोधिनस्तमसो विभवाः । इमे वृत्र-वल-पणिदस्यवः, तेषां राजानश्च भवन्ति । प्रकाशावरकानां एतेषां अन्धकारविभवानां विनाशाय साहाय्यं देवानां अपेक्षितव्यमस्माकम् । अन्तर्यजने मन्त्रवीर्यसम्पन्नया वाचा देवाना मागमनं प्रार्थयेमहि । तेभ्यः समर्पणीय मस्मदीयं अर्पयित्वा तैः प्रतिदीयमानं सर्वं स्वीकृत्य गन्तव्यं धामाधिरोढुं शक्ताः साधिकाराः स्याम ॥

अन्ते चेदं वेदर्षीणा मुत्तमं रहस्यम् । सर्वरहस्यशिखरायमाणं 'एकं सत्' 'तदेकम्' इतीद मेवोत्तरकालेषु औपनिषदर्षिभिर्मुख्यलक्ष्यतया विवृत्य विस्पष्ट मुपदिष्टम्' ॥

अयं गुप्तार्थवेदसारः भगवदरविन्द-श्रीचरणैः प्रदर्शितां मन्त्रार्थविवरणपद्धतिं वृण्वतां उपयोगायात्र प्रतिपादितः । अयं अनर्घो मार्गदर्शी स्यात् तेषां, ये च न पश्यन्त्युपपत्तिं सायणीयवेदार्थ-निर्णयप्रवचनेषु, ये वा न तृप्तिं लभन्ते स्वकपोलकल्पना-सम्मिश्र-पाश्चात्यपाण्डित्य-निर्णीत-वेदोक्तमन्त्रार्थ-देवतास्वरूपादि-सिद्धान्तेषु । ये पुनः सायणसाहाय्येनैव रहस्यार्थं सूक्तानां जिज्ञासन्ते, अध्यात्मदेवतादिरहस्यनिक्षेपं सङ्केत-

रूपाच्छादित मधिगन्तु मध्वानं गवेषयन्ति, तेषां दिग्दर्शनायात्यन्त मुपयुक्तो भूयादयं सङ्क्षेप इति शिवम् ॥

## अथ द्वितीयः खण्डः

आधुनिक-नव्यविद्याविचार-संस्कारायत्त-पूर्वपक्षाक्षेप-समाध्युपन्यासमुखेन वेदरहस्यार्थ-सिद्धान्तपक्षः समासेन प्रत्यपादि प्रथमे खण्डे । स्वपक्षस्य परीक्षा चिरन्तनभारतीय-पाण्डित्यदृष्ट्या प्रवर्तते । अत्र ऋग्वेदादि-ब्राह्मणोपनिषदन्ताः श्रुतिग्रन्थाः निरुक्त-बृहद्देवतादीन्यन्यानि प्रमाणग्रन्थवचनानि धर्ममीमांसकानां उक्तयश्च कियद्दूरं वेदरहस्य-सिद्धान्तं पोषयन्तीति निरीक्ष्यते । तत्र प्रथमं तावत् केचन प्रश्ना उद्गच्छन्ति । तेषां सविमर्श-प्रतिवचनद्वारेण ऋग्वेदसङ्केतपदार्थ-समालम्बं गूढार्थमन्त्रसिद्धान्तं निरूपयिष्यामः ॥

कथमयं चतुर्णां वेदानां सतां ऋग्वेद एव विचारायादीयते? किं पाश्चात्यैः उक्तविधया युष्माकमपि अयमेक एव प्रमाणभूतो वेदः? न चेत् कथम्? किं धर्ममीमांसापक्षस्याधार एवासाधुः? तथा कथमसौ मीमांसकसिद्धान्तो बहोः कालाल्लब्धप्रतिष्ठः? किमत्यन्तपुरातनत्वादेव मन्त्राणां माननीयत्वं पावनताप्रतीतिर्वा? को वा मुख्यो विषय ऋगर्थमीमांसया साध्यते? बहुविधा हि मन्त्राः प्राचीनैर्निरुक्तकारादिभिः अङ्गीक्रियते, कथं तर्हि सर्वाऽपि मन्त्रसंहिता अध्यात्माधिदैवतादि-रहस्यविद्यानिधानभूतेत्युच्यते? अथ चेत् सङ्केतपदार्थग्रहणेन आपाततः उच्चावचाभिप्रायाणां मन्त्राणां वस्तुतो रहस्यप्रकाशनेन विरोधपरिहारो भवतीत्युच्येत, के ते सङ्केताः कथं न ते स्वकपोलकल्पिताः, अस्ति किं तथाविधसङ्केतगूढार्थ-व्याख्यानमार्गस्याधारो वेदे? सन्तु तावद्वचः । वैदिकं समयधर्मं वैदिकं यजनं वैदिकं मन्त्रं च अधिकृत्य वैदिकग्रन्थेषु रहस्यार्थप्रतिपादकानि सन्ति वा प्रमाणवचनानि? किं वा यथार्थस्वरूपं देवानाम्? अस्मत्परिचिताधुनातन तत्त्वसिद्धान्तापेक्षया को वा भवति तत्त्वनिर्णयो वेदर्षीणाम्? अपि नव्यं पाश्चात्यं पन्थान मवलम्ब्य वेदार्थविमर्शप्रवृत्तानां प्रशंसनीयविद्वच्चरितानां भारतीयानां परिश्रमः सर्वोऽपि विफलो वक्तव्यः? अपि नासीद्वेदर्षीणा मस्माकं चान्तरे दीर्घयुगे कोऽप्युद्यमो

वेदमन्त्राणां गोप्यं प्रवेष्टुम्? त इमे प्रश्नाः सावधानं विचार्य प्रत्युक्ताः सङ्केतरहस्यार्थं सिद्धान्तं द्रढयेयुरिति अनयोर्द्वितीय-तृतीयखण्डयोः विचारयिष्यामः ॥

## ॥ ऋग्वेदः ॥

तथ्यमिदं यच्चतस्रः संहिता वेदानामिति । कथं तर्हि वेदानां त्रयीत्वं उपपद्यते? मन्त्राणां त्रित्वं, मन्त्रसमुदायरूपसंहितानां चतुष्ट्वम् । के वा मन्त्राः? अयं मन्त्रः अयं नेति निर्णायकं लक्षणं कैश्चिदुक्तप्रायमपि प्रायिकमेव स्यात् । स एव मन्त्रः 'यमृषयस्त्रयीविदो विदुः ऋचः सामानि यजूंषि' इति । ये अभियुक्तैर्मन्त्रा नोच्यन्ते न ते मन्त्रा इति शबरस्वामी । अभियुक्तानां वागेव प्रमाणं मन्त्रत्वपरिज्ञाने इति सारांशः । मन्त्राणां ऋग्यजुस्साम्नां स्वरूपाणि सूत्रितानि जैमिनिना 'तेषां ऋग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या, शेषे यजुःशब्दः' (२. १-३५-३६-३७) । इदं पर्यवसन्नम् । ऋचो मन्त्राः छन्दोबद्धाः, ऋचो गेयाः सामानि, शिष्टाः गद्यरूपाः मन्त्राः यजूंषीति त्रिधा वेद-व्यवस्थितेर्वेदत्रयं त्रयीशब्दवाच्यतां भजते । ऋचां समुदायः ऋग्वेदसंहिता, यजुषां यजुस्संहिता, साम्नां च सामवेदसंहितेति व्यवहारः । चतुर्थी अथर्ववेदसंहिता अन्या च वर्तते । तत्र ऋचो यजूंषि च वर्तन्ते । ऋक्संहितापठिता ऋचो बह्व्यो दृश्यन्ते । तथा यजूंष्यपि क्वचित् सांहितिकानि, ये च मन्त्रास्त्रय्यामाम्नातास्तेषां यज्ञोपयोगित्वं सिद्धम् । केवलाथर्वणिकानां मन्त्राणां पुरुषार्थसाधकानि प्रयोजनान्तराणि कीर्त्यन्ते । तावता न वेदमन्त्रत्वहानिः । यतः चतुर्थी संहिताऽपि वेदसंहितैव भवति । अस्यां भूयिष्ठा ऋचः ऋग्वेदस्था इत्युक्तम् । तथा यजुर्वेदेऽपि क्वचित् । तस्मादृक्संहितायां व्याख्यातायां अथर्व-संहितास्थानामृचामपि तात्पर्यं उक्तं भवति । अवशिष्टानां आथर्वणिकमन्त्राणां व्याख्यानाय नावसरः, यज्ञानुपयोगित्वात्, यज्ञस्य अस्मत्सिद्धान्तानुसारेण सङ्केतरूपत्वाच्च । याज्ञिक्यां त्रय्यामेवाभिनिवेशोऽत्रास्माकम् । यद्यपि ऋग्वेदीयसङ्केतरहस्यं अथर्वमन्त्राणामप्यर्पकं भवेत्, तथाऽपि स नेह विचारोऽपेक्ष्यते । सामवेदसंहितास्था ऋचः प्रायः सर्वा अपि ऋक्संहितास्था इति सामवेदः पृथङ् न विचार्यते । अवशिष्टं यजुः । यदि यजुर्वेदोऽत्र न विचार्यते, तस्यास्ति कारणम् । अस्मदुद्देशस्य यजुर्वेदविचारात् सम्भाव्यं फलं सन्दि-ग्धम् । उद्दिष्टो विषयस्तु ऋषीणां सङ्केतपदार्थव्यवस्था-प्रकाशनम्, तद्द्वारेण मन्त्र-

रहस्यार्थविवरणम्, देवतानां तत्त्वं, मानुषस्य प्रामण्यतया अस्मत्पूर्वैर्महर्षिभिर्निर्दिष्टं लक्ष्यम् । सर्वमेतदस्मन्मन्त्रभाषास्वरूपपरिशीलनात्सुलभो भवति । यजुर्वेदीयभाषासङ्केतादयो न सर्वत्र समानाः सुगाह्या वा भवन्ति । अन्यदस्ति कष्टं यजुर्विचारे । तैत्तिरीयाणां कृष्णयजुर्वेदः मन्त्रब्राह्मणात्मकः, अस्माकं तु केवलमन्त्रार्थस्य विचारः प्रवर्तते । न तु उपनिषदा रहितस्य सहितस्य वा ब्राह्मणस्य । यजुर्वेदे तु कर्मोपयोगिभिर्ब्राह्मणैः युक्ताः पठ्यन्ते मन्त्राः । अन्या ऋगादिसंहिता इव नेयं तैत्तिरीयाणां मन्त्राणामेव संहिता । मन्त्रब्राह्मणानां समुदायोऽपि संहिताव्यपदेशं भजते ॥

ब्राह्मणानि कर्मपरतया मन्त्राणां विवरणाय प्रवर्तन्त इति न विवादः । यद्यपि तेषां विवरणप्रकारोऽपि सङ्केतार्थमेव स्पष्टं विद्योतयति, तथाऽपि याज्ञिककर्मसु विनियोगायैव सन्ति मन्त्रा इति तेषां मतमिति विशदं भवेच्चिन्तकानाम् । अत एव सायणः ब्राह्मणान्याश्रित्य मन्त्रार्थविवरणं चकार । तथा सति मन्त्रब्राह्मणात्मके कृष्णयजुर्वेदे अस्मदीयविचारस्य मन्त्रार्थपरस्य नास्त्यवकाशः । ब्राह्मणानि हि मन्त्राणां कर्मोपयोगितां एव निरूपयन्ति, न मन्त्रगुह्यार्थान् । अन्यदस्ति चित्रम्, यदि स्मरेम याज्ञवल्क्यचरितम् । तदिदं समासेनोच्यते । स हि गुरोर्वैशम्पायनादधीतं यजुर्वेदं गुरवे प्रत्यर्पितवान् । प्रत्यर्प्यमाणो वेदस्तित्तिरिरूपतया निर्गतः । ततस्स तपस्तेपे । वाजिरूपतया भगवानादित्यः प्रसन्नस्तस्मै शुद्धमन्त्रात्मकं ब्राह्मणैरसम्मिश्रं शुक्लं यजुर्वेदं ददौ । ततस्स वाजसनेयसंहिता विश्रुता । विस्तरभयादियं कथा नेहोच्यते, विष्णुपुराणे सविस्तरा द्रष्टव्या (३. ५.) । याज्ञिकपक्ष-प्रोद्बलक-ब्राह्मणानां वेदसंहितासु स्थानं न स्यात् इत्याशयो याज्ञवल्क्यस्येति मन्यामहे । याज्ञिकेषु कर्मसु मन्त्राणां विनियोगाय ब्राह्मणानि सन्तु नाम, किं तु पृथक् सन्तु यथान्यशाखीयब्राह्मणानि तत्तन्मन्त्रसंहिताभ्यः पृथगेव वर्तन्ते । यदि कर्मपरं ब्राह्मणं कृष्णयजुस्संहितायां स्थानं अलभत, ब्रह्मपरोपनिषदपि कुतो न संहितायां स्थानमियादिति स्पर्धमानेव ईशावास्याख्या एकैव संहितोपनिषत् शुक्लयजुस्संहितायां पदं भेजे । एवं एकेषां पूर्वेषां मन्त्रसंहितायां ब्राह्मणस्यान्तर्भावो न युक्त इत्यासीन्मतिरित्युपपन्न ऊहः । तैत्तिरीयसंहितायां ब्राह्मणान्तर्भावस्य फलितं दूरप्रसरमभूत् । येनोत्तरकालिक-भारतीयसमयधर्मव्यवस्थायां मन्त्रब्राह्मणात्मको वेद इति सौत्रसिद्धान्तः प्रतिष्ठां प्रापत् । अत्रैव बीजं द्रष्टव्यं अनन्तरकालेषु फलितस्य

कर्मपारम्यसिद्धान्तस्य, यदनुसारेण कर्म-ज्ञानकाण्डात्मको वेदः, कर्मकाण्डः सब्राह्मणो वेदमन्त्रसंहिताग्रन्थः, ज्ञानकाण्ड उपनिषदिति सर्वेषां सूत्रकाराणां तदनन्तराणामाचार्याणां चाङ्गीकार इति निर्विवादम् ॥

एवं हि पाश्चात्यास्तदनुसारिण इव वयमपि यजुर्वेदस्य प्रामाण्यं न गणयाम इति मा भूच्छङ्का । यजूंष्यपि मन्त्राः, नैव न्यक्कुर्मो वेदं बह्वृचं याजुषं आथर्वणिकं वा । तर्हि कुतो न याजुषो मन्त्रभागो वा विचार्यत इति चेदुच्यते । अस्मदुद्देशस्योपायभूतो न स विचारः । न तावता यजुर्मन्त्राणां वेदत्वमस्माभिर्न लक्ष्यते । यथा अस्मत्पूर्वैः वैदिकैः शैवाद्यागमिकैरपि रुद्राध्यायादिमन्त्रभागा जपपारायणादिषूपयुक्ता दृष्टचराः भवन्ति, तथा अस्माकमपि मन्त्रभागेषु पावनत्व-पूज्यत्वादि-दृष्टिर्ध्रुवेत्यसंशयम् । अत्र विश्रुताः पञ्चाक्षराष्टाक्षरादयो मन्त्रा याजुषा एवेति स्मार्यम् ॥

अथ बह्वृचानां संहितैव विषयो विचारस्य । न तावता वेदशाखान्तराणामवरं प्रामाण्यम् । किं तु अस्माकं अपेक्षिता सर्वा सामग्री ऋग्वेदादेव लभ्यते । यत्र शब्द-स्वरूपं अत्यन्तप्राचीनम्, न च दुर्गमा आर्षसङ्केतपदार्थ-व्यवस्था । ऋषीणा मध्यात्म-ज्ञानबलसम्पत्तिश्च न दुर्ग्रहा । देवतानां तत्त्वं च विवेकग्राह्यम् । अन्यदस्ति मुख्यं कारणम् । यजुर्वेदो यज्ञार्थः प्रसिद्धः, अत एव तं अध्वर्युशाखामाहुः । यज्ञार्थं ऋचां प्राधान्यं याजुषा एवामनन्ति– "यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद् यदृचा तद् दृढम्" इति (६. ५. १०.) । इदं चेह द्रष्टव्यम् । ऋग्भिस्सह यजूंपि सामानि च यज्ञार्थे वर्तन्ते । ऋग्वेदात्परं यजुर्वेद इत्याधुनिकं ऐतिहासिकं मतं असत् । ऋक्संहितायामेव यजुषां साम्नां चोल्लेखोऽवधेयः । त्रयीं विना नास्ति यज्ञः । त्रय्यां एकं वा विहाय न कोऽपि यागोऽनुष्ठातुं शक्यः, अवियोज्या सा यज्ञे । बहिर्यागे त्रय्या उपयोगो वर्तते, तथा तत्प्रयोक्तॄणां स्थानानि च भवन्ति । अन्तर्यागेऽपि त्रय्याः स्थानं अस्ति । इदं च सम्प्रत्याचक्ष्महे । सर्वथा स्मृतावुपस्थाप्यं त्विदम् यन्न केवलं तैत्तिरीयसंहिता सर्वाण्याध्वर्यवाणि ब्राह्मणानि यज्ञाधिकारविचारे यज्ञकर्मदेवताफलादिरहस्येषु ऋचां प्राधान्य-मभिज्ञाय 'तदृचाऽभ्युक्तम्' इति शतशो घोषयन्ति । किमु वक्तव्यम् ज्ञानैकलक्ष्या उप-निषद ऋचां प्राधान्यं ज्ञानाधिकारे प्रशंसन्तीति । "तदुक्तमृषिणा, तदेष श्लोकः, अत्रैते

मन्त्रा भवन्ति, एतदधिविधाय ऋषिरवोचत्, तदेषाऽभ्युक्ता" एवमादीनि वचनानि प्रत्यक्षं मन्त्रदृष्टीनां ऋचां पारम्यं प्रशंसन्तीति दिक् ॥

अथ त्रयीपदवाच्यस्य ऋग्यजुस्सामाख्य-वेदत्रयस्य सङ्केतार्थोऽन्तर्यजने व्याख्यायते । 'अस्य महतो भूतस्य ब्रह्मणो निःश्वसितं' वेदा इति श्रूयते । ऐतरेयशतपथादि-ब्राह्मणेभ्यः इदमवगम्यते यद् भूर्भुवःस्वराख्य-व्याहृतित्रयलक्षित-त्रैलोक्यस्याध्यक्षैरग्नि-वाय्वादित्यैः क्रमश ऋग्यजुःसाम्नां प्रादुर्भावः सम्पादित इति । किं विवक्षितम्? प्रथमे खण्डे यज्ञस्य सङ्केतार्थविवरणप्रसङ्गे होत्रादय ऋत्विजो देवा इत्युक्तम् अत्र त्रय्या देवानां वृत्तयः प्रतिपाद्यन्ते । अग्निर्होता देवानामाह्वाता, स वाचोऽधिदेवता सर्वासामृचां तस्यां वाच्युपसंहारः यया देवानां प्रभावः कीर्त्यते, तत्त्वानि प्रकाश्यन्ते, उज्ज्वलन्त्या यया देवानामालयः स्वर्लोकोऽधिगम्यते । आदित्यः साम्नामाधिपत्यं वहति, स उच्चैर्गायति, सत्य-सम्मद-लय-विधायकैर्गानैर्नादस्पन्दैर्यजमानमुन्नीय देवेषु मध्ये विराजयति । उभयोः द्यावा-पृथिव्योस्तदध्यक्षयोरग्नि-सूर्ययोरन्तरे अन्तरिक्षपतिर्वायुः क्रियाध्यक्षो यजुर्भिर्यजन-कार्यं साध्नोति । स एवाध्वर्युः देवानाम् । अत एव यजुषां प्राधान्यं याज्ञे कर्मणि । ऋग्भिः प्राज्ञाभिर्वाग्भिः अर्चनं विधीयते, सामभिर्यजमानः परं स्वरं उद्गीथाख्यं भज-नीयसम्मदपदं उन्नीयते, यजुर्भिः कर्मणा यजनं निर्वर्त्यते— तत्तद्दलिग्रूपैर्देवैरिति सङ्ग्रहः । एवं तिस्रो देवताः अग्निर्वायुरादित्य इति । याश्च होता अध्वर्युरुद्गाता, इति क्रमशः ऋग्यजुस्साम्नां प्रयोक्त्र्योऽन्तर्यजने । अयमेव परमार्थो यज्ञः सङ्केतात्मतया बाह्ययज्ञे रहोविद्यानधिकारिणां उपयोगाय पूर्वैर्महर्षिभिर्व्यवस्थापित इति बोध्यम् ॥

## धर्ममीमांसा

मन्त्र-ब्राह्मणयोर्वेदनामधेयं, न केवलं मन्त्राः वेदव्यपदेशं भजेरन् इति ब्रुवाणाःपूर्व-मीमांसकाः वेदरहस्यार्थमतं नाभिमन्येरन् । तेषामस्माकं च दक्षिणोत्तरवदन्तरं द्रष्टव्यम् । यानि तत्त्वान्युपाश्रित्य गूढार्थसङ्केतपक्षोऽस्माकं ध्रियते तेषां परिपन्थी तदीयः सिद्धान्तः । वयं मन्त्राणां प्राधान्यं आश्रयामहे, ब्राह्मणानां तु कर्मोपयोगित्वं अभ्युपगच्छामः । मन्त्रसं-हितैव वेदशब्दमुख्यार्थ इति वयम् । मन्त्रार्थविचारद्वारेण वेदरहस्यनिरूपणमस्मल्लक्ष्यम् । मीमांसकास्तु ब्राह्मणवाक्यार्थविचारिणः, यद्यपीह नास्माकं प्रवृत्तिस्तत्सिद्धान्तविस्तर-परी-

क्षायां, तथाऽपि तेषां मूलभूत-धर्मजिज्ञासा मधिकृत्य नास्ति किञ्चिद्विमृष्टव्यम् । वेदोऽखिलो धर्ममूलमिति न्यायतो धर्मजिज्ञासायां प्रवृत्तास्ते वेदविचारं कुर्वन्ति । वेदानां धर्ममूलत्वोक्तौ नास्ति विवादः । धर्मशब्दार्थस्तु कुत्र पर्यवस्यतीत्येव चिन्त्यम् । सामयाचारिकं धर्ममेव मनसि निधाय वेदस्य कर्मपरतापक्षमेव परमं सिद्धान्तं मन्यन्ते । अयं च तेषां वादः – वेदादेव धर्मस्य ज्ञानं, स च परमो धर्मः यज्ञस्वरूपो वेदे प्रतिपादितः । यजमानेन देवार्थं द्रव्यत्यागः क्रियते, सर्वस्वमपि दीयते विश्वजितीव । कर्मणा स्वर्गफलं प्राप्नोति यजमानः । अपूर्वं फलदातृ, तच्च किमप्यदृष्टं कर्मजन्यफलदायक मित्याद्याहुः । अलमेतावता अस्माकं धर्मविषयकचर्चायाः । मीमांसकानां कैश्चिद् अतिचित्रवादैः सह न विद्यते कोऽपि नः सम्बन्धः । स्वर्गमुद्दिश्य तेषां अभिप्रायः, तथा देवानधिकृत्यापि, मन्त्रस्वरूपम्, वेदवर्णानां नित्यत्वम्, शरीरस्थः कोऽपि जीवो देहव्यतिरिक्तो गत्यन्तरविरहाद् अभ्युपगन्तव्यः, जगतो जीवानां वा ईश्वरनिरपेक्षता, जगत आत्यन्तिकस्वतन्त्रसत्ता-याथार्थ्यादि निदर्शनं भवति निरङ्कुशवादवैचित्र्याः ॥

अथ पश्यामस्तावत्, को नामायं धर्मः यस्य ज्ञानं वेदादेव लभ्यते? याज्ञिकं कर्मैव परमो धर्मो वेदैरुपदिष्ट इति चेत् स न सर्वेषामविशेषेण पुरुषाणां सर्वेषु युगेषु उपयुक्तोभवत्यभूद्वा । एकत्र कोणे भूमण्डलस्य कतिपयमानुषवर्गीयाणामेव उपयोज्य इति स्पष्टम् । एवं तथाविध-यज्ञकर्मात्मको धर्मः सामयाचारिक एव, न सार्वलौकिकः, न सनातनो वेति प्रत्यक्षम् । एतादृशं धर्मस्वरूपमेव सूत्रकारैर्निर्णीतम् । तर्हि ब्राह्मणानि उपादाय सामुदायिक-वैदिक-यजनोत्सवादीनां व्यवस्थापनकाम्यया वेदविधीन् निश्चित्य वेदो विधिश्चोदनेति सिद्धान्तितम् । अतः परमस्मात् श्रौतरूपाद् धर्मात् स्मार्तगृह्यादयः सामयाचारिकाः राजधर्मादयश्च चातुर्वर्ण्यादि-सामुदायिकवृत्तिव्यवस्थायै अकल्पन्तेति वेदमूलताधर्मस्य न्याय्या भवतु नाम । तथा हि पूर्वेषां सङ्घे समष्टेर्व्यष्टेश्च धर्मास्तित्वप्रत्ययो विश्वतोमुखो निष्पन्न इति प्रशंसाभाजनमेवैतत् । परं तु मन्त्र-ब्राह्मणयोर्वेदनामधेयमिति कृत्वा आद्या व्यवस्था उत्तरकालेषु बहुसङ्कटदशा-प्रसवित्री समजायतेति नात्र संशयः । स चादिमः सूत्रकारकृतो व्यतिक्रमो नाभिज्ञातः, न शोधितः । स हि व्यतिक्रम एव, येन कर्मसु विनियोगार्था एव मन्त्राः, मन्त्राणां कर्मपरतया व्याख्यानं-

एव साधु नान्यथेति प्रत्ययो वेदार्थविचारिणां हृदयेषु पदं लेभे । इदानीमिदं विशदं भवेत् यत् सतीषु ऋग्वेदादिसंहितासु तैत्तिरीयसंहितायामेकस्यामेव ब्राह्मणानामन्तर्भावः अभवदनर्थकर इति । परमस्य वैदिकधर्मस्य यज्ञस्य रहस्यार्थः एवमुपरक्तः क्रमशः श्रौत-धर्मस्य बाह्ययज्ञात् नान्यत्रोपपत्तिरिति स्थितिः सम्पादिता । अत एव कालक्रमेण प्रादुर्भूताः आचार्यपुरुषाः सर्वेऽपि श्रुतिं काण्डद्वयात्मिका मभ्युपगम्य मन्त्रसंहितानां कर्मकाण्डान्तर्गतत्व मभिमान्य उपनिषदामेव ज्ञानकाण्डत्वं चाख्यापयन् ॥

अथ याज्ञिकं कर्म स्थूलसङ्केतरूपतया पृथक् स्थापयित्वा अन्तरर्थो यज्ञस्य चेत् निरीक्ष्येत, तदा तस्य सार्वलौकिकत्वं स्पष्टतां गच्छेत् । परः स्रष्टा सर्वस्य जगतः पुरुषः स्वमात्मानं अर्पयित्वा यज्ञधर्मेण सृष्टिं व्यधत्तेत्यस्य तत्त्वमपि सुबोधं भवेत् । अतोऽन्या का वा विवक्षा पुरुषसूक्तमन्त्राणाम्? यद्यपि पुरुषसूक्तभाषा अन्यसूक्ततारतम्यापेक्षया प्रायेण सुगमा अत एव स्पष्टार्था च भवति, तथाऽपि नेदं एकाकि सूक्तं सहस्राधिक-सूक्तायां दाशतय्यां, यत्र यज्ञेन परमधर्मेण सृष्टिर्विधीयत इत्याशयो लक्ष्यते । इदं च शतशो बहृचानामाम्नायेषु पश्यामः– ऋषिर्यदा देवेभ्यः स्वात्मीयं किमपि ददाति, स वेद तावता त्यागेन तावन्तं मर्त्यांशमुज्झित्वा अमर्त्यांश मादत्त इति । देवा हि तस्य यजमानस्य अर्पणाङ्गीकारेण स्वयं यावदवकाशं तं स्वीकृत्य तत्र प्रादुर्भवन्ति । यज्ञेन मर्त्यः अमर्त्यतां व्रजति चेत् जगद्व्यापाराय सृष्टौ प्रथमं जन्म प्राप्तानां अमर्त्यानामपि मर्त्ये द्वितीयं जन्म भवति । इदमन्योन्यपरिवर्तनमेव यज्ञस्य यथार्थं स्वरूपम् । अनेनैव सृष्टिः सर्वत्र निर्वाह्यते । अस्मिन् विनिमयधर्मे यज्ञरहस्यं प्रतिष्ठितम् । येन दानादान-रूपेण इतरेतरव्यवहारेण व्यष्टि-समष्ट्योः ब्रह्माण्ड-पिण्डाण्डयोर्जीव-देवयोरैहिकामुष्मिकयोः वा सम्बन्धो ध्रियते, वृत्तयश्चाल्यन्ते, स्थितिरेव सिध्यति । "सखायस्त्वा ववृमहे" इति ऋषिषु सख्येन देवतां सम्बोधयत्सु, उभयेषामन्योन्यसम्प्रवेशरूपः साक्षात्सम्बन्धः कश्चन प्रवृत्त इति ज्ञायेत । चिरन्तनमिदमार्षं यज्ञतत्त्वं कालेन गलता धूलिधूसरैः कर्म-पारम्यवादैराच्छादितं शोचनीयदशं परामृश्य तत् शुभ्रमुज्जीवितं विवृतं विधातुमुद्यता हरिगीता । "सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वं एष वोऽस्त्विष्टकामधुक् ॥ देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" ॥ (३. १०, ११.) इति हि गीयते ॥

एवं स्थिते, केचन विवदेरन्नेवम्— उत्तरकालेषु अध्यात्मतत्त्व-सिद्धान्ताभ्युदयानुसारेण यज्ञस्यैवंविधं सूक्ष्मं व्याख्यानमाविष्कृतम्, भगवद्गीतासु प्रतिपादितो यज्ञतत्त्वार्थो न वस्तुतो वैदिके यज्ञ उपपद्यत इति । नैवं मन्तव्यम् । तथ्यमिदं यद्विविधानां दार्शनिकसिद्धान्तानां वेदान्तेषु समन्वयं समर्थयति वेदान्तसारभूता भगवद्गीता । एवंविधनानासिद्धान्तसामरस्य-सम्पादनाय अपेक्षिता गाढा प्रज्ञा, प्रसन्नो विवेकः, दृढः सत्यग्रहः, आर्जवं च तत्त्वप्रतिपादने गीतासु भासन्त इत्यद्धा । यद्यत्र प्रतिपादितं यज्ञस्वरूपं न वस्तुतो वेदोक्त-यज्ञतत्त्वमित्युच्येत, तदा गीतासु मृषावादं तत्त्वाग्रहणं वा आरोपितवन्तः स्याम । तथाविधमन्याय्यं साहसं आस्थातुं को वा सन्नद्धः स्यादृजुधीः? यद्यपि सर्वत्र सामरस्यपरायणो गीतोपदेशः, तथाऽपि दूषणीयेऽर्थे न माध्यस्थ्यमवलम्बते । दूष्यान् दूषयति पोषयति च पोष्यान् । कर्मणो नान्यदस्तीति वादिनः पुष्पितां वाचं अविपश्चितो वदन्तीति निन्दति । (२. ४२) कर्मबद्धश्रद्धानां वेदरहस्य-प्रवेशानधिकारिणां अज्ञानां न बुद्धिभेदं जनयेदित्युपदिशति, (३. ३६) मन्त्रदृष्टीर्मानयति, सर्वेषां वेदानां सर्वेश्वरपदप्राप्तिरेव मुख्योपदेश इति साधयति (१५. १५.) । अपि च, न केवलं मोक्षपरं गीताशास्त्रमेवं यज्ञतत्त्वं विवृणोतीति मन्तव्यम् । समयाचार-कर्मविधानपरेषु धर्मशास्त्रेष्वपि वैदिककर्मणां ज्ञानरहस्यगर्भितत्वं प्रतिपाद्यमानं पश्यामः । मनुस्मृतौ "वेदाभ्यास" इत्यारभ्य "वैदिके कर्मयोगे तु सर्वाण्येतान्यशेषतः । अन्तर्भवन्ति क्रमशः तस्मिन् तस्मिन् क्रियाविधौ" ॥ (१२. ८३-८७) इत्युक्तम् । कर्मणां योगसाधनसङ्केतभूतत्वमेव विवक्षितमिति कः सन्देहः? गीताप्रयुक्तः कर्मयोगशब्द एव स्मृतौ प्रयुक्तः । स्मृति-गीतयोः पौर्वापर्यविचारो नावश्यकोऽत्र । बाह्यानि कर्माणि आभ्यन्तरस्य साधनस्य कञ्चुकानीव स्थितानीत्युभयोराशय इत्येतावदसन्दिग्धम् ॥

एवं वैदिकस्य कर्मात्मकस्य यागस्यान्तरर्थः सर्वत्र पुरातनग्रन्थेषु ब्राह्मणेषु पुराणेषु महाभारते च प्रथित इति का नाम विचिकित्सा? यदा तु कर्मपराः ब्राह्मणानां वेदे परमं स्थानं तेषां मुख्यवेदत्वं विश्वस्य तादृशं मतमतिष्ठिपन् तदा आरब्धः कर्मात्मको यज्ञ एव परो धर्म उपदिष्टो वेद इति वादः । येनात्यन्ततिरोधानं वेदयज्ञरहस्यस्यापादितम् । मन्त्राणां कर्मैकप्रयोजनत्वं अर्थशून्यपौरोहित्याधीनत्वं च फलितम् । पूर्वमीमांसकैर्भगीरथप्रयासेन मन्त्रब्राह्मणात्मकस्य कर्मपरतायां प्रतिष्ठापितायां, समया-

चार्यपुरुषैरर्वाचीनैरपि उपनिषत्स्वेव ज्ञानाधिकार इत्यभ्युपगतः । अयं च परीक्ष्य प्रागुक्तः । यद्यपि शास्त्रीयेषु व्यवहारेषु यज्ञकर्मपारम्यमेव वेदे प्रतिपादितमिति ब्रवीति, दिष्ट्या न कोऽपि मीमांसकः कर्मणा परमः पुरुषार्थः साधयितुं शक्य इति तृप्यति । अत एव कर्मपारम्यवादिनः शास्त्रत एव पूर्वमीमांसकाः श्रद्धया तु वेदान्तिन आस्तिकाश्च भवन्ति । एवं द्वैधीभावजन्यं विरोधं गीतोपदिष्ट-निष्कामकर्म-सिद्धान्ताश्रयणेन परिहरन्ति । बाढम्, परं तु शुद्धः पूर्वतन्त्रसिद्धान्तस्तु, धर्मात्परतरं नास्ति, स च धर्मो यज्ञः, तस्य ज्ञानं वेदाल्लभ्यते, तस्याचरणात् स्वर्गप्राप्तिरूपं फलमवाप्यते, कः कुत्र किमर्थो वा ईश्वरः परमात्मा वा, कर्मस्तुतिपरा एवोपनिषदः विधिशेषा इत्येव ब्रूयात् ॥

अथेदं वक्तव्यम् । पूर्वतन्त्रविदां सूक्ष्मविचार-विवादवैदग्ध्यं सर्वपण्डितमण्डली-सम्मानितमिति नात्युक्तिः । अयुक्तेषु क्लिष्टेषु वा स्थलेषु तेषां स्वपक्षसमर्थन-धोरणी चतुरतरेति निर्विवादम् । वेदवाक्यपदवर्ग-नित्यतासिद्धान्तः तेषां सुप्रसिद्धः । तत्र वेद-नित्यत्व-स्थापनप्रसक्तौ, अकाराद्याः सर्वेऽपि वर्णा नित्या इति प्रतिपादयन्ति । तथा सति, वेदे पुरावृत्तविषयाणां सृष्टवस्तु-व्यक्तिविशेषनिर्देशक-संज्ञावाचकानां नास्त्यवकाशः । अपि तु प्रत्यक्षं बहुशो वर्तन्ते संज्ञापदानि, तथा वृत्तान्तान्वाख्यानानि । कथं तादृशेषु स्थलेषु नित्यत्वं वेद॰॰ ॰॰॰॰॰॰ इति चेदुपपद्यत एव गौण्या वृत्त्या तात्पर्य-ग्रहणादित्याहुः । "बबरः प्रावाहणिरकामयत" इत्यादौ प्राग्बबरजन्मनो नायं ग्रन्थो भूतपूर्वस्तस्मादनित्यता वेदस्येति चेत् न बबरपदं संज्ञापदमित्युच्यते शबरस्वामिना । आह चैवम्– "यः प्रवाहयति स प्रावाहणिः बबर इति शब्दानुकृतिः, तेन यो नित्यो अर्थस्तमेवैतौ शब्दौ वदिष्यतः" (जै. सू. भा. १. १. ३१.) । शब्दानुकृतेः संज्ञाशब्दः भ्रम इति व्याख्यातम् । वृत्तान्तान्वाख्यान-प्रसङ्गे भाष्यकार-विवरणचातुरीं निरीक्षामहे । 'प्रजापतिरात्मनो वपामुदक्खिदत्' इत्यामनन्ति तैत्तिरीयाः (२. १. १.) । अत्र भाष्यपङ्क्तिः— "प्रजापतिरात्मनो वपामुदक्खिददिति॰॰॰॰॰॰ नित्यः कश्चिदर्थः प्रजापतिः स्यात् वायुराकाश आदित्यो वा । स आत्मनो वपामुदक्खिददिति वृष्टिं वायुं रश्मिं वा । तामग्नौ प्रागृह्णात् वैद्युते आर्चिषे लौकिके वा । ततोऽज इत्यन्नं बीजं वीरुद्वा । तमालभ्य तमुपयुज्य प्रजाः पशून् प्राप्नोतीति गौणाः शब्दाः" (२. १. १०.) इदं च निदर्शनं भवति मीमांसकानां सूक्ष्मविचारकौशलस्य । यतो वेदनित्यता-समर्थनक्लेशे समुपस्थिते, गौणीं

श्रुतिमाश्रित्य पुरावृत्तं काल्पनिकीं गाथा वा चातुर्येण नित्यार्थपरतया व्याख्याय कृतकृत्यतां भजन्ते । इदं त्वत्र चित्रम् । रूपकदृष्टान्तावलम्बनेन अन्वाख्यानानां सङ्केतरूपतामेव गौण्या वृत्त्या प्रतिपादयन्ति । वेदगुप्तार्थसिद्धान्तेऽपि वेदपदानां यौगिकत्वप्राधान्येन सङ्केतार्थ-निरूपणे गौणी वृत्तिराश्रीयते । एष तूभयोर्विशेषः । पूर्वस्तु बाह्यः स्थूलः कर्मप्रतिपादनपरः सङ्केतार्थः, अपरस्तु आन्तरः सूक्ष्मः गुप्तविद्यासाधनपरः सङ्केतार्थः । ब्रह्माण्डनिर्माणप्रायेण प्रयासेन "पर्वतो रन्ध्रितः मूषको लब्धः" इति लोकोक्तेः दृष्टान्तभूतमरसं फलं सम्पादितं पूर्वतन्त्रविद्भिरिति सङ्ग्रहः ॥

पूर्वमीमांसकसिद्धान्तमधिकृत्य इदमवश्य-वक्तव्यमासीत् । यदन्यविद्या-संस्कार-सम्पन्नैः प्राज्ञैरपि मीमांसकानां मन्त्रार्थविचारप्रामाणिकता विश्वस्यते । ते हि पूर्वतन्त्र-सिद्धान्तमूलमज्ञात्वैव वेदे नास्ति रहस्यं सङ्केतार्थो वेति स्वयं प्रतियन्ति, अन्यानपि प्रत्याय्य अपथं प्रापयन्ति । तस्मादिदं बोध्यम् । यदि वेदो नाम प्राधान्येन ब्राह्मणं, मन्त्रसहितं ब्राह्मणं भवति, तदा तदायत्तश्रौतसूत्रधर्मशास्त्रादीन्युपजीव्य प्रवृत्ता पूर्वमीमांसैव वेदविचारे प्रमाणं स्यात् । यदि पुनर्वेदो नाम प्राधान्येन मन्त्रदृष्टय ऋचो यजूंषि वा यत्प्रभावा एव ज्ञानकर्मपर-विवरणग्रन्थेषु सारण्यकब्राह्मणेषु दृश्यन्ते, तदा मन्त्रात्मक-वेदार्थविचारे पूर्वमीमांसा नैव प्रमाणं भवितुमर्हति । अध्यात्मविचारदूरा सैषा ब्राह्मणार्थमीमांसा ईश्वरसाक्षात्कारसाधनादि-रहस्यविद्यास्तित्व-संस्कारशून्या सार्वलौकिक-परमपुरुषार्थ-चिन्तादविष्ठा वेदरहस्यार्थपरीक्षायां कथं प्रामाणिकीं वाणीमास्थातुं अधिकुरुताम् ?

## मन्त्रः

ऋचो मन्त्राश्छन्दोबद्धा ऋषीणां दृष्टयो भवन्ति । यमर्थमाध्याय यदर्थं शरीर-यात्रामचालयन् ऋषयः, यं च निजानुयायिनां उत्तरकालिकानां च निःश्रेयसाय लक्ष्यत्वेन प्रत्यपादयन्, सोऽर्थः तत् प्रयोजनं तल्लक्ष्यं च ऋक्सूक्तसंहिताग्रन्थात् शक्यानि अवगन्तुम् । इमाश्च कवितापदवाच्याः सन्तु नाम, अपि तु नेमाः कविताः अस्मत्-परिचितसाहित्य-सन्दर्भविशेषा इति मन्तव्यम् । न वा ते कवयः सर्वजनीनाः सर्वेषु देशेषु कालेषु अद्यापि दृश्यमाना इव काव्यनिर्मातारः इति युक्तं मन्तुम् । नेदमैतिह्य-

मात्रम् । चर्मचक्षुरगोचरान् लोकान् लोकाध्यक्षान् देवान् तत्सम्बन्धिनः सूक्ष्मान् धर्मान् कुशाग्रधीगम्यानि सत्यानि च सूक्तेषु गर्भितानि मन्त्रवर्णा एव बोधयन्ति । मर्यादाविशेषनिबद्धान् सूक्ष्मानिमान् लोकान् तद्देवांश्च साक्षादधिगन्तुं मानवः शरीरस्थ एव पारयेद् यदि गुप्तमध्वानं प्रवेष्टुमधिकारः सम्पाद्येतानेनेत्यार्षोऽयं रहस्यसम्प्रदायः । ऋच इमाश्च मन्त्रदृष्टयः कीर्त्यन्ते । ऋषिं मन्त्रद्रष्टारमाहुः । ऋषिर्न केवलं पश्यति, शृणोत्यपि । दृष्टमर्थं सत्यमाविष्कर्तुमपेक्षितं शब्दमप्यधिगच्छति । तस्मादृषिरतीन्द्रियार्थदर्शी कविपदवाच्यो भवति वेदे । सः क्रान्तदर्शी कविः श्रोताऽपि सत्यस्य । तस्मात् कवयः "सत्यश्रुतः" इति प्रसिद्धिर्वेदे । नेदमृषेर्दर्शनं श्रवणं वा लोकसामान्यं भवति । ऋषेरेषा दृष्टिरासाधारणी तथा श्रुतिरपि, याभ्यां प्रकाशिता कविताप्यासाधारणी । रमणीयार्थप्रतिपादक-शब्दगुम्फितरसभावभरित-वीर्यवत्तमायाः सर्वोत्कृष्टाया अपि कवितायाः विलक्षणा मन्त्रकविता । अत एव न युक्तं वेदसूक्तकाव्यानां रसोत्तरसाहित्य-कविता-कोटावारोपणम् । अन्यादृशोत्कर्षा वेदसूक्तकवितेत्यस्यास्ति कारणम् । स च उत्कर्षः सूक्तानां मन्त्रात्मकत्वे प्रतिष्ठितः । विशिष्टा मन्त्रस्य शक्तिः । भवतु मन्त्रार्थो नातिगरीयान् अस्मदृष्टेः, भवतु मन्त्रशब्दोऽपि नात्यन्त-काव्यशोभावहः, भवतु व्यञ्जितो भावो नातिगाढः । माऽस्तु परिस्फुटा छन्दोवाचकभङ्गी । तथाऽपि शक्तेर्न हानिः मन्त्रस्य । सेयं श्रद्धा वेदर्षिकालादारभ्य अद्यावधि भारतीय-आस्तिकजनहृदयेषु लब्ध-प्रतिष्ठेति नेह सन्देहगन्धोऽपि विद्यते । मन्त्रमधिकृत्येदमैतिह्यं उत्तरकालेषु आचार्यपुरुषैः तदनुयायिभिश्च रक्षितम् । तावती श्रद्धा मन्त्रमहिमनि रूढमूला यावत्या मन्त्रस्यार्थ-विचारो नावश्यकः, यतो मन्त्रशक्तिविजृम्भणं मन्त्रतात्पर्यग्रहणाधीनं न भवतीत्यपि मन्यन्ते चैके । सर्वपुरुषार्थसिद्धेरलौकिक उपायो मन्त्र इति बहोः कालादागतमिदं आर्षं मतम् । तथा चाहुः— "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिक उपायो वेदः" इति । अत्र वेदशब्देन मन्त्र एव मुख्यो बोध्यः । कुत एवं मन्त्रमहिमा वर्ण्यते? वेदर्षिभिरध्यात्म-विद्यैक-निरतैरपि गुप्तविद्यासु रहस्यतन्त्रेषु विचक्षणैश्चास्थितम् । अन्तरङ्गीयैरुपायैः बाह्यार्थाः साधयितुं शक्या इति तेषां मतम् । सह धीवृत्त्या शब्दस्तथा प्रयोगयोग्यः यथा सकलविधाः पुरुषार्थाः साधिताः स्युरिति सिद्धान्तस्तेषाम् । अत एव प्रायः सर्वेऽपि मन्त्रा याज्ञिके विनियोगे प्रथमाना अपि बहवः यज्ञादन्यत्र फलावाप्तये प्रयुज्यन्ते । एवं मन्त्राणां माहात्म्यं न केवलं चिरन्तनत्वे प्रतिष्ठितम्, किं तु ऋषिदृष्टत्वे शक्तिमत्त्वे

चेत्यवगन्तव्यम् । अपरं च, मन्त्राणां पावनत्व-वीर्यवत्त्वादि-धर्मास्तेषां नादसत्त्वात्मक-देवताशरीरभूतत्वादित्याहुरेके । एवमपि स्यान्नाम । वस्तुतस्तु महिमा मन्त्रस्य तत्प्रादुर्भावप्रकारायत्त इति मन्त्रवर्णेभ्य एवावगम्यते । ऋचां स्थानं अक्षराख्यं परमं व्योम यत्र विश्वेषां देवानां आवासः, यस्तन्न जानाति तस्य ऋचा कार्यं न भवतीत्येवमर्थका दीर्घतमसो मन्त्रदृष्टिर्भवति— "ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते" (१. १६४. ३९.) । तस्मिन्नेव सूक्तेऽन्यत्रेयमृग्भवति— "चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" (१. १६४. ४५.) । गहनार्थोऽयं मन्त्रः । मन्त्रद्रष्टा कविः हृदयाख्यमन्तस्समुद्रमवगाह्य तुरीयाख्यं धाम देवानां साक्षात्कृत्य दृष्टान् सत्यार्थान् आद्यां वाचमुपादाय श्रुतैः शब्दैः आविष्करोति । तस्मादुत्तमपदादक्षरात् प्रस्थाय आगच्छन्त्यास्तस्या वाचः चत्वारि स्थानानि भवन्ति । तत्र त्रीणि धामानि रहस्यानि गुहानिहितानि मानुषश्रवणस्यागोचराणि तस्याश्चतुर्थी अवतरणभूरेव मानुषी वाक् । चत्वार्यपि वाग्धामानि ऋषेरन्तरङ्गदीक्षितस्य मनीषिणः विदितानि, नान्यस्य । एवं मन्त्रस्य द्रष्टारः कवयः सत्यश्रुतः मन्त्रान् न कल्पयामासुः, किं तु अद्राक्षुः इति प्रसिद्धिः । ऋचां वाचां मूलस्थानभूतस्य देवतानामायतनस्य परमस्य व्योम्नः अकृतकत्वात् ततः प्रादुर्भूतवेदमन्त्रवर्णेषु नित्यत्वं उपचर्यते । मन्त्रदर्शिन ऋषेर्जन्मनः प्राक् मृतेः परं च सिद्धमेव परमं व्योम । तस्मान्न तन्मन्त्रद्रष्टर्यधीनं भवति, मन्त्रदर्शनं तु तस्मिन्नधीनं बोध्यम् । यद्यपि मन्त्रशब्दार्थाववियोज्यौ परमाकाशे सिद्धौ भवतः, तत्प्रादुर्भावस्तु ऋष्यधिकारसम्पत्तिसापेक्षो बोध्यः । अत एव ऋक्संहितायां शश्वदृषेर्मन्त्रकृत्त्वमुल्लिखितं दृश्यते— "ऋषेर्मन्त्रकृतां स्तोमैः" (९. ११४. २.) "हृदा यत्तष्टान् मन्त्रानशंसन्" (१. ६७. २.) इत्येवंजातीयकैः मन्त्रवर्णैः स्पष्टं कृतकत्वे मन्त्राणां अवगम्यमाने, कथं नित्यो वेद इति मा भूच्छङ्का । प्रागुक्तविधया ऋचां मूलभूतामाद्यां वाचं परमव्योमसंस्थामधिकृत्य सा नित्येत्याह मन्त्रवर्णः । सर्वस्यापि वेदस्य नित्यत्वं परमव्योमप्रभवत्वात् कीर्तितम् । "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्" (८. ६४. ६.) । इति ऋचो व्याख्याने सायणभाष्यमपि एवमुपपद्यते । "नित्यया उत्पत्तिरहितया वाचा मन्त्ररूपया" इति सायणः । अस्मदुक्तरीत्या नानुपपत्तिर्वेदनित्यत्व-ऋषिकर्तृकत्वयोः । अत एव महाभाष्य-

कारः, 'तेन प्रोक्तम्' (४. ३. १०१.) इति पाणिनीयसूत्र-व्याख्याप्रसङ्गे "प्रोक्तग्रहणमनर्थकम्" इत्यारभ्य अन्ते ब्रूते– "छन्दोर्थे तर्हीदं वक्तव्यम् । न हि छन्दांसि क्रियन्ते नित्यानि छन्दांसि । छन्दोर्थमिति चेत् तुल्यम् । ……… ननु चोक्तम् नहि छन्दांसि क्रियन्ते नित्यानि छन्दांसीति । यद्यप्यर्थो नित्यः यात्वसौ वर्णानुपूर्वी सा अनित्या । तद्भेदाच्चैतद्भवति" । अत्र कैयटस्य टीका 'तद्भेदादानुपूर्वीभेदात्' 'प्रपूर्वो वचिः प्रकाशने अध्यापनरूपे वा' अत्र वर्णानामानुपूर्वी न नित्या इति वेदशब्दार्थ-नित्यत्वमभ्युपगच्छन् भगवान् पतञ्जलिः पदवर्ण-वाक्यबन्ध-व्यवस्थानित्यतां नाङ्गीचकार । सा च व्यवस्था प्रकाशनरूपा ऋषिकर्तृका । एवं वेदानां कृतकत्वाकृतकत्वयोरुपपत्तिर्द्रष्टव्या । सर्वथा ऋचामसाधारण-कवित्वरूपं मन्त्रत्वं उदाहृतैर्विरूप-दीर्घतमसोर्मन्त्रवर्णैः सुगमं भवति । परं शतश उदाहरणानि वाचो महिमानुवर्णनपराणि ऋक्संहितायां द्रष्टव्यानि, विस्तरभयाद् इह नोल्लिख्यन्ते ॥

सम्प्रति ऋचां बाह्यार्थः सायणभाष्यादवगम्यते । रहस्यार्थस्तु सङ्केतपदार्थायत्त इति प्रागुक्तः । दुरवगमो मन्त्रार्थ इति निरुक्तकारोऽप्याह । तपःस्थितानां ऋषीणां ब्रह्मपदवाच्यो मन्त्रः प्रत्यक्षोऽभवत् नान्यथेति यास्कस्याभिप्रायः । तथा चाह– 'तदेनान् तपस्यमानान् ब्रह्म स्वयम्भु अभ्यनार्षत् तदृषयोऽभवन् तदृषीणां ऋषित्वम्' (२. ११.) । मन्त्रार्थो दुरूह इत्यन्यत्राह– "तस्मात्तपसा पारमीप्सितव्यम्" (१३. १३.) इति । वेदार्थाधिगमाय तपस ऋते नास्ति शरणम्, तपोनिष्ठस्यर्षेर्मन्त्रः प्रत्यक्षो भवतीति च यास्कमतं इति विशदं भवति । अस्मदुक्तमन्त्रप्रादुर्भाव-तन्नित्यत्व-कृतकत्वानि न केवलं मन्त्रवर्णैर्निर्णीतानि, किं तु निरुक्तकारेणापि समर्थितानि भवन्ति । यास्कोक्तीरेव समर्थयति बृहद्देवता । 'न प्रत्यक्षमनृषेरस्ति मन्त्रम्' (नपुंसकमार्षम्) इत्याह (८. १२९.) ऋषेर्दर्शनसामर्थ्यं, त्रय्याः प्रयोजनम्, सम्यगनुष्ठितानां कर्मणां फलमित्येवमादयो बृहद्देवतायां प्रतिपादिताः वेदरहस्यार्थपक्षं पोषयन्तीति न संशयः । अत्रेमे श्लोका उदाहार्याः ॥

७. १३० "योगेन दाक्ष्येण दमेन बुद्ध्या बाहुश्रुत्येन तपसा नियोगैः ।
उपास्यास्ताः कृत्स्नशो देवताया ऋचो ह यो वेद स वेद देवान् ॥
१३१ मन्त्राणां देवताविद् यः प्रयुङ्क्ते कर्म कर्हिचित् ।
जुषन्ते देवतास्तस्य हविर्नादेवताविदः ॥

१३२ अविज्ञानप्रदिष्टं हि हविर्नेहेत दैवतम् ।
तस्मान्मनसि संयम्य देवतां जुहुयाद्धविः ॥
१३३ स्वाध्यायमपि योऽधीते मन्त्रदैवतविच्छुचिः ।
स सत्रसदिव स्वर्गे सत्रसद्भिरपीज्यते ॥"

अथेदमवधारणीयम् । यद्यपि वेदमन्त्रस्य पवित्रत्वशक्तिमत्त्वादिकं मन्त्रदृष्टेः गूढार्थभूत-आध्यात्मिकादि-तत्त्वमूलकमेव भवति, तथाऽपि बाह्यार्थपक्षेऽपि यज्ञादन्यत्रोपयोगाय कल्पते । इदमेव मूलं भवति तस्य ऐतिह्यस्य, येन अलौकिकेनोपायेन लौकिका अर्था अपि साध्यन्त इति रूढा प्रतीतिः । इदमेव मूलं शौनकीयऋग्विधानादिग्रन्थस्य, यत्र त्रिविधपुरुषार्थसाधनोपयोगित्वेन कल्पाः प्रोक्ताः । इदमपि तथ्यं यद्यास्केनोच्यते— "उच्चावचैरभिप्रायै ऋषीणां मन्त्रदृष्टयो भवन्ति" इति । तदेव बृहद्देवताप्याह । 'अर्थेप्सवः खल्वृषयः छन्दोभिर्देवताः पुरा । अभ्यधावन्निति च्छन्दोमध्ये ताहुर्महर्षयः' (८. १२७) इति । यद्येवं लौकिकार्थानुद्दिश्यापि मन्त्राः प्रवृत्ताः, कथं तर्हि परमपावनो वेद अध्यात्मनिष्ठाविशेषरहस्यानां निक्षेप इत्युच्यत इति चेन्नेहासङ्गतिः । प्रागेवोक्तम् गूढार्थ एव परमार्थो वेदानां स्थूलार्थस्तु कर्मसु प्रयोजनवान् पुरुषार्थसाधनेषु वेति । यद्यप्यापातत ऋषीणां अभिप्रायेषु उच्चावचत्वं स्पष्टमेव भवति, तथाऽप्यन्तरर्थविमर्शे शपथाभिशाप-निन्दा-प्रशंसादीनां आध्यात्मिकनिष्ठाचरित्रसम्बन्धित्वमवदातं भवेत् । स्थूलविचारिणां पाश्चात्यानुयायिनां वा पक्षे ऋषीणां वैमत्यमेवोपस्थितमिति नात्र चित्रम् । यद्यपि न वयं सर्वेऽपि मन्त्रद्रष्टारः समकालिकाः समाननिष्ठादशाः मन्त्रान् अदर्शन्निति ब्रूमहे, तथाऽपीदं तथ्यं प्रतिपादयामः । ऋषयः सर्वेऽपि समानमेव सङ्केतपदार्थसमुदायं समानमेव बाह्याभ्यन्तरयागं समानमेव भूरादिलोकसंस्थानं समानमेव देवतातत्त्वं समानमेव परमं पुरुषार्थं च विज्ञाय स्वनिष्ठादशा-विशेषापेक्षितार्थ-साधनाय देवान् अयजन्निति सङ्केतरूपगूढार्थ-तत्त्वान्वेषणपराणां प्राज्ञानां अयं समीचीनः पन्थाः परिस्फुटो भवेदिति दिक् ॥

## ऋचः प्रमाणं वेदरहस्ये

अथ तां रहस्यभाषामधिकृत्य विचार्यते, यत्र गोपितो भवति मन्त्रार्थः । तत्र रहस्यं सङ्केतरूपेण केन वाऽप्याकारेण तथाऽऽच्छादितं यथा स्थूलधियां सङ्केतार्थोपस्थिति-

शङ्काऽपि न जायते, यत् सङ्केतशब्दाः बाह्यार्थाभिधायकाः सुतरां उपपन्ना एव प्रायो लक्ष्यन्ते । सङ्केताश्च यागसम्बन्धिनः लौकिकाः पदार्थाः ब्रह्माण्डप्रकृति-विलासितानि वा भवन्ति । अथवा कश्चन मूढधीः मन्त्रप्रतिपादिता अग्न्यादयो देवाः केऽप्यमानुषाः पुरुषा भूताग्नि-वाय्वादित्य-मरुत्-पर्जन्यादिवेषेण प्रत्यक्षदृश्येनावस्थिता इति वा प्रतीयात् । तदिह प्रथमं किं तद्रहस्यं भाषितं वेदे द्रष्टव्यम्? यदि वेद एव रहस्यवागुल्लिखितेति निश्चयो लभ्यते, ततः परं कथं तद्गोपनं साधितमिति सङ्केतपदार्थव्यवस्थां परीक्षामहे ॥

तपोनिष्ठानामृषीणां देवताभिः सह व्यवहारे तदर्थप्रकाशने च रहस्यभाषाव्यवस्थापितेति निर्णेतुं प्रमाणमस्ति चेत् तत् प्रथमं मन्त्रदृष्टिष्वेव स्यात्, ऋषिवाक्येषु एव द्रष्टव्यम् । ऋग्वेदसंहितायां रहस्यपदार्थप्रसङ्गेषु किमुद्दिश्य रहस्यार्थपरं पदं प्रयुज्यत इति विचार्यमाणे, कोऽप्यसुरो देवो वा किमपि स्थानं कोऽपि लोको वा तिरोहितो न दृश्यत इति वक्तव्ये अन्तर्हित-गूढ-रहस्य-अदृश्याद्यपरपर्याय-निण्यपदं प्रयुज्यते । क्वचिद्देवतासान्निध्यसम्पादिकां वाचं निर्दिश्य प्रयुज्यमानं "नाम" अपि हृदि गुहायां गूढमन्तर्हितं रहस्यं इति वा कीर्त्यते । वेदितव्यानि ज्ञानानि स्तोत्रपराणि वचांसि च निण्यपदार्थभूत-रहस्यानीत्युच्यते । निरुक्तपठितानां षण्णां अन्तर्हितनाम्नामेकं निण्यपदम् । इदं च प्रसङ्गवशात् गोपितं अन्तर्हितं तिरोहितं अदृश्यं रहस्यं इति प्रायः समानार्थेषु वेदे प्रयुक्तमीक्षितव्यम् । इदं च पदं सम्प्रति परीक्ष्य वेदर्षयः स्वप्रयुक्तभाषायां किमपि रहस्यं निक्षिप्य बहिर्मुखमतिभ्योऽपक्वेभ्यश्च गोपायाञ्चक्रुरिति निरूपयिष्यामः । इदं चात्र नः सुदैवम्, यत् सन्दर्भवशात् सविमर्शमविमर्शं वा इच्छानुसारेण वेदपदानां अर्थान् व्याचक्षाणः सायणः निण्यपदस्य एकरीत्या अन्तर्हितं अदर्शनं गतं वेत्यर्थं व्याचष्टे । निण्यपदार्थे साधु व्याकुर्वन्नपि प्रसक्तवाक्यतात्पर्यं स्वोद्देशस्यानपेक्षितमपि यथेच्छं प्रतिपादयतीति प्रथमं दर्शयिष्यामः । निण्यपदप्रयोगस्थलेषु एकत्र अन्यथा व्याख्यासीत् । तथा व्याख्याने प्रमाणं न दत्तम्, नापि प्रयोजनम् । प्रमाणं दत्तं चेत् तत्प्रमाणवचनं अन्यथा गृहीतम् । "निण्यम्" निर्णामधेयमित्याह । हिरण्यस्तूपस्य ऐन्द्रेषु सूक्तेषु इयं ऋग्भवति– "अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं विचरन्त्यापः दीर्घं तम आशयदिन्द्रशत्रुः" (१ ३२. १०.) । अत्र स्थूलोऽर्थः सायणीयपदप्रयोगानुपयुज्य दीयते । अतिष्ठन्तीनां

स्थितिरहितानां अनिवेशनानां उपवेशनरहितानां (प्रवहणस्वभावत्वात्) काष्ठानां अपां मध्ये निहितं निक्षिप्तं वृत्रस्य निण्यं निर्णामधेयं शरीरं आपः विचरन्ति विशेषेण पर्याक्रम्य प्रवहन्ति । इन्द्रशत्रुः वृत्रः (जलमध्ये प्रक्षिप्ते सति) दीर्घं तमः दीर्घनिद्रात्मकं मरणं यथा भवति तथा आशयत् सर्वतः पतितवान् । अत्र अप्सु मग्नत्वेन गूढत्वात् तदीयं नाम न केनापि ज्ञायते । तस्मात् निण्यं निर्णामधेयमिति सायणीयं विवरणम् । का नाम विवक्षा? पश्यामस्तावत् । इन्द्रो वृत्रं जघान, तस्य देहपाते तमः शरीरं तस्य दीर्घनिद्रामवाप । तददृश्यमभवत् । गाढमधः पतने उपरि निरन्तरं अपां प्रवाहे, तच्छरीरमन्तर्हितम् । अत्र अदृश्यमभवदित्युक्तौ ऐतिहासिकपक्षस्य आधिभौतिकपक्षस्य वा का हानिः? मेघेषु इन्द्रायुधेनाहतेषु तत्र बन्धिता आपो निर्मुक्ता भवन्ति । तासामावरकं वृत्रशरीरमधः पतति, उपर्यापः प्रवहन्ति, तस्मादन्तर्हितमदृश्यं एव तच्छरीरम् । कुतस्तर्हि नामशून्यमित्यभिप्रैति स सायणः? सरलेनैव पथा अर्थसामञ्जस्ये सिद्धे "गूढत्वात् तस्य नाम न केनापि ज्ञायते" इति कुतोऽयं द्राविडप्राणायामः? न वा निण्यपदस्य निर्णामधेयपर्यायत्वं निघण्टुपठितम् । यास्क एनामृचं उदाहार्षीत्, तत्र "निण्यं निर्णामम्" इत्याह । निर्णामपदार्थः दुर्गाचार्य-व्याख्यानाद् अवगम्यते "येनासौ नीचैर्नमति" तं प्रदेशं विचरन्तीति दुर्गः । नीचैर्नमनेन गन्तव्यं निम्नं स्थलं निण्यमिति विवरणं अनुस्वारान्तस्य "निर्णामं" इति पदस्य युक्तं भवति । नामधेयार्थे तु "निर्णाम" इति नकारान्तनपुंसकलिङ्गं स्यात्, न तु निर्णामं इति अनुस्वारान्तम् । तस्मादत्र यास्कमेवं भ्रमादुदाजहार सायणः । एवं व्याख्याय कथं निर्णामधेयोऽभूद् वृत्र इति चेत् सोऽत्यन्तं तथा मृतः यथा तस्य नामापि स्मृतिपथादपगतं किल! एवं स्वपक्षस्यानपेक्षितमपि क्लिष्टं व्याख्यानं शतशो दृश्यते सायणभाष्य इत्यलं विस्तरेण ॥

निण्यं अन्तर्हितमित्यसन्दिग्धम् । सर्वत्र सायणः निघण्टुपठितार्थमेव स्वीकृत्य यास्कं च प्रायश उदाहरति । अन्तर्हितपदार्थः गूढरहस्याद्यपर-पर्यायो बोध्यः । कौत्सस्य अग्निसूक्तस्य व्याख्याने 'निण्यं' रहस्यं 'अन्तर्हितं' इत्येवाह— 'क इमं वो निण्यं आचिकेत वत्सो मातॄर्जनयत स्वधाभिः" (१. ९५. ४.) । ऋषिः पृच्छति, युष्मासु को वा रहस्यमग्निं जानाति यो वत्सः स्वधापदवाच्य-स्वधारणसामर्थ्यधर्मैः मातॄरजनयदिति । एवं न केवलं असुरे वृत्रे अन्तर्हिते निण्यपदं प्रयुक्तम्, अपि तु अप्सु वनेषु वा गूढमग्निमावेद-

यितुमपि प्रयुज्यते । क्वचित् किमपि स्थानं कमपि लोकं वा गूढं अभिधातुं निण्यपदं प्रयुक्तम् । काश्यपः सोमं सम्बोधयति— "तव त्ये सोम पवमान निण्ये विश्वे देवास्त्रय एकादशासः" (९. ९२. ४.) । अत्र रहस्यं स्थानं सोमस्योल्लिखितं यत्र त्रयस्त्रिंशद्देवाः स्वधाभिस्तं मृजन्तीति मन्त्रस्य उत्तरार्धे पठ्यते । जीव आत्माऽपि अन्तर्हित उक्तः । अत्र दीर्घतमसो मन्त्रदृष्टिर्भवति— "न विजानामि यदि वेदमस्मि निण्यः सन्नद्धो मनसा चरामि" (१. १६४. ३७.) । वासिष्ठमण्डले शाखा-सहस्रात्मतया विततं तद्रहस्यं 'निण्यं' हार्दसाक्षात्कारैः सत्यदर्शनैरुपायैरधिगम्यत इत्युक्तम् । "त इन्निण्यं हृदयस्य प्रकेतैः सहस्रवल्शमभिसञ्चरन्ति" (७. ३३. ९.) । वसिष्ठः मारुते सूक्ते मरुतां रूपवाहनादीनि साश्चर्यं पश्यन् धीर एव इमानि (निण्यानि) रहस्यानि जानाति इत्याह— "एतानि धीरो निण्या चिकेत पृश्निर्यदूधो मही जभार" (७. ५६. ४.) । पुनश्चान्यत्र वसिष्ठः मित्रावरुणौ सम्बोध्य प्राह— 'अस्माकं रहस्यानि स्तोत्राणि युवयोर्विदितानि' इति । 'न वां निण्यानि अचिते अभूवन्' (७. ६१. ५.) । "निण्यानि रहस्यान्यपि स्तोत्राणि" इति सायणः । यन्न प्रत्यक्षं गूढं उद्देशपूर्वकं गोपितं रहस्यं वा तदभिधातुं निण्यपदं प्रयुक्तं वेदे इति निदर्शनायोक्तान्युदाहरणानि पर्याप्तानि । "अमूरा विश्वा वृषणा" इत्यस्या ऋचः (७. ६१. ५.) तात्पर्ये परीक्षिते, रहस्यं मन्त्रार्थं विजानन्ति देवाः यन्न किमपि तेषां दृष्टेरपवारयितुं शक्यं, यच्च रहस्यं जनसामान्याद् बहिर्मुखबुद्धेः रक्षणाय आच्छादितं इति तात्पर्यं स्पष्टं भवति । अरविन्दश्रीचरणैः वामदेवसूक्तस्तथा "निण्या वचांसि" इति वाक् निस्संशयं वेदभाषारहस्यमुद्धाटयतीति निरूपितम् । सेयं मन्त्रदृष्टिः भवति वामदेवस्य— "एता विश्वा विदुषे वेधो नीथानि अग्ने निण्या वचांसि । निवचना कवये काव्यानि अशंसिषं मतिभिर्विप्र उक्थैः" (४. ३. १६.) । सायणीयविवरणार्थानि पदान्युपयुज्य अस्यार्थोऽत्र समस्यते । वेधः विधातः हे अग्ने, विदुषे कवये (तुभ्यं) नीथानि (फलप्रापकाणि, सुप्रणीतानि वा) "निण्या" गूढानि निवचनानि नितरां वक्तव्यानि काव्यानि कविभिः क्रान्तदर्शिभिः मेधाविभिः कृतानि "एता विश्वा वचांसि" एतानि सर्वाणि वाक्यानि "मतिभिः उक्थैः" मननीयैः स्तोत्रैः शस्त्रैश्च (सहितः) विप्रः प्राज्ञोऽहं अशंसिषं अवोचं, तानि सेवस्व । अन्यश्च मन्त्र इह वामदेवस्योदाहार्यः । तत्र इन्द्रेण क्रियमाणं सोमपानं रहसि निर्वर्त्यत इति दृष्टान्तोदाहरणेन प्रतिपाद्यते, यथा ऋषिः वेदितव्यानर्थान् रहसि साधयति, तथा सोममन्यैरविदितमेव रहसि पिबतीन्द्रः

इति । "कविर्न निण्यं विदथानि साधन् वृषा यत् सेकं विपिपानो अर्चात्" (४. १६. ३.) ॥

निण्यपदं रहस्यार्थे सोदाहरणं व्याख्यातं, येन वेदभाषायां रहस्यं ऋषिभिः निक्षिप्तमित्यसन्दिग्धमवगतं भवति । तच्च रहस्यं क्वचिद्देवता क्वचिदसुरः अन्यत्र ज्ञानं सत्यं कमप्यर्थमुद्दिश्य भवतीति न विस्मार्यम् । ऋक्संहितायां अन्यानि च पदानि रहस्यार्थद्योतकानि प्रयुज्यन्ते । अत्र द्वित्राण्युदाहरणानि दीयन्ते, यतोऽपि वेदमन्त्रेषु रहस्यं निक्षिप्तमिति ज्ञायेत । गुहा-गुह्य-अपीच्यानि क्वचित् प्रतीच्यं अपि रहस्यार्थे प्रयुज्यन्ते । स्वगुण-क्रियाद्योतकैः उपयोग-विशेषायत्तैः उक्थ-शस्त्र-स्तोम-गीर्-वाग्-वाणी-ब्रह्म-मन्त्रादिपदैः ऋग् व्यवह्रियत इति विदितचरमेवैतत् । अपि तु सन्ति मन्त्राः यत्र गूढभाषाकलितां स्तोत्रवाचमावेदयितुं नामपदं प्रयुज्यते । "नाम" इत्यभिधान-वाचकं नामधेयमित्यत्र न विवादः । वेदे देवतायाः नाम न केवलं अन्याभ्यो देवताभ्यो व्यावर्त्य कामपि देवताव्यक्तिं निर्देष्टुं प्रयुज्यते । किं तु प्रकृतं देवताव्यक्ति-विशेषं विज्ञापयितुं सन्निधापयितुं वा या शक्तिरपेक्षिता भवति तां बिभर्ति तन्नाम । यतः तद्देवेभ्यो नमनाय साधनं भवति ततस्तन्नामेत्युच्यते । नमनसाधनं नामेति सायणीयव्याख्यानेऽपि दृश्यते । तस्मान्नामपदं देवताराधन-साधनभूतं सर्वाङ्गप्रणामं आविष्कुर्वन्तं मन्त्रदृष्टिरूपं स्तवं लक्षयतीति ग्राह्यम् । "नम उक्तिं विधेम" इत्यादावपि देवतां प्रति सर्वथा प्रह्वत्वं अनहङ्कृतेर्देवात्मभावं सम्पिपादयिषोर्भक्तस्यपेक्षेयम् । तस्मात् नमनसाधनं 'नाम' स्तोत्रपर्यायतया वेदे प्रयुज्यमानं ऋग्भ्य एवावगम्यते । तत्रापि तच्च नाम क्वचित् गुहायां निहितं गूढं रहस्यमिति वर्ण्यते । क्वचिदपीच्य-शब्दविशिष्टं नामपदं प्रयुक्तम् । अपीच्यं निण्यमिव अन्तर्हितनामैव भवति । नैकेषु मन्त्रेषु रहस्यं नाम रहस्यं स्तोत्रं वा अपीच्यनामप्रयोगेणावेदितं लक्ष्यते । गृत्समदस्य मन्त्रदृष्टिर्भवति— "तदस्यानीकं उत चारु नाम अपीच्यं वर्धते नप्तुरपाम्" (२. ३५. ११.) । अपां वत्सस्य शोभनं मुखं रहस्यं नाम अन्तर्हितं स्तवात्मकं नाम च वर्धते इति भावः । स्थूलपक्षे यः कोऽप्यस्तु नामशब्दार्थः, सोऽपीच्यपदार्थ-विशिष्ट इति तु असन्दिग्धं भवति । नाभाक ऋषिः वरुणं स्तौति— "यो धर्ता भुवनानां य उस्राणां अपीच्या वेद नामानि गुह्या । स कविः काव्या पुरु रूपं द्यौरिव पुष्यति नभन्तामन्यके समे" (८. ४१. ५.) । अत्र इमानि पदान्यवधेयानि— 'अपीच्या नामानि गुह्या कविः काव्या' इति । इदं च तात्पर्यं

लक्षणीयम् । यो वरुणः सर्वेषां भुवनानां धारकः देवाधिष्ठानभूत-रश्मिसमूहोपलक्षित-ज्ञानप्रकाशानां रहस्यानि गुहाहितानि नामानि (स्तोत्राणि वा) जानाति, स कविः क्रान्तदर्शी काव्यानि कविकर्माणि पुष्यति, यथा द्यौः पुरुरूपं पोषयतीति सङ्क्षेपार्थः ॥

अस्मिन्नेव सूक्ते– "स समुद्रो अपीच्यस्तुरो द्यामिव रोहति" (८. ४१. ८.) । इति अन्तर्हितो रहस्यसमुद्रो वरुण इत्युक्तम् । कविर्भार्गव ऋषिः मातापित्रोः रहस्यं नाम पुत्रो धारयतीत्याह– "ऋतस्य जिह्वा ······ दधाति पुत्रः पित्रोरपीच्यं नाम" (९. ७५. २.) "सदा ते नाम स्वयशो विवक्मि" (७. २२. ५.) इति वासिष्ठमन्त्र-व्याख्याने "तव नाम स्तोत्रं सदा सदैव ब्रवीमि" इति सायणः । पुनश्च "मर्त्या अमर्त्यस्य ते भूरि नाम मनामहे । विप्रासो जातवेदसः ॥" (८. ११. ५.) 'भूरि नाम मनामहे' विस्तृतं स्तोत्रं जानीम इति सायणः ॥

बहवः सन्ति मन्त्रवर्णाः संहितायाम्, यत्र नामपदं देवताव्यक्ति-विशेषं प्रति विज्ञापनाय प्रयुज्यते, ऋचं स्तोत्रवाचं द्योतयितुंचोपयुज्यते । द्विधाऽपि तद्रहस्यं अन्तर्हितं गहनं वेत्यर्थे वर्तते । कदाचित् प्रतीच्य-पदमपि तिरोहित-रहस्य-गोपिताद्यर्थे व्यवहृतं पश्यामः । परं तु आभिमुख्ये अन्तर्मुखत्वे वा लोक इव वेदेऽपि भूयः प्रयुक्तं भवति । अन्तर्मुखत्वार्थे प्रत्यगात्मादिः प्रयोगोऽद्याऽपि वर्तते । प्रत्यङ्मुख-पराङ्मुखशब्दौ अन्तर्मुख-बहिर्मुखवाचकौ विदितचरौ । उपन्यस्तमिदं सर्वं वेदभाषायां रहस्यमस्तीति बह्वृचसंहिता-प्रमाणपूर्वकं निरूपयितुं पर्याप्तं भवेद्विचाररसिकानां जिज्ञासूनाम् ॥

अथ तद्रहस्यं परीक्ष्यते । तत् कीदृशं, केनाच्छादनेन अन्तरर्थभूतं तत् संव्रियते? प्रागुक्तं सङ्केतपदार्थरूपं तदावरणमित्याचक्ष्महे । यद्यपि अन्तरर्थः परमार्थो गोप्यविद्या-प्रवृत्तानां अध्यात्मनिष्ठानां विदित उपयुक्तश्च भवति, बाह्योऽर्थः सङ्केतरूपः स्थूलः कर्मपराणामुपयुक्तश्चेत्युक्तं, तथाऽपि बाह्योऽर्थः सर्वत्र सङ्केतरूपेणैव साध्यत इति नियमो न भवति । सङ्केत-निरपेक्षमेव बाह्याभ्यन्तरार्थद्वयं मन्त्राणामनेकत्र निष्पन्नं भवति । तत्र मुख्यं साधनं कतिपयपदानां द्व्यर्थता बह्वर्थता वा प्रसिद्धा वेदे । अत्रेमान्युदा-हरणानि भवन्ति– 'धीः' इदं च पदं लोके वेदे च बुद्धिवाचकं प्रसिद्धम् । धी-शब्दः कर्मार्थेऽपि गृह्यते वेदे । तस्मादन्तरर्थे सर्वत्र ज्ञानवृत्ति-विशेषतयैव व्याख्यायते । बाह्ये तु धियः कर्माणीति व्याचक्षते, न तु सर्वत्रेति नियमः । केतुरिति प्रज्ञापकोऽन्त-र्ज्ञान-विलासविशेषः गूढार्थपक्षे, बाह्यपक्षे तु केतूनां धात्वर्थानुगमेन प्रज्ञापकत्वे प्रोक्तेऽपि

अत्यन्तस्थूलतया रश्मिभिः प्रकाशदानात् तेषां प्रत्यक्षं जगत् प्रति प्रज्ञापकत्वाच्च केतवो रश्मय उच्यन्ते। अत्रापि न नियमः, नैकः केतुपदार्थः कर्मपरव्याख्यातॄणाम्। 'श्रवः' इदं च शृणोति-धात्वर्थसम्बन्धिनां श्रुति-श्रोत्र-श्रवणादीनामेकं पदम्। अन्तःश्रवणं दिव्यं वा, देवतानुग्रहान्निष्ठाविशेषलब्धाज्ज्ञानबलावेशाद्वा सिद्धं श्रवणं इति रहस्यसम्प्रदायार्थः। स्थूलपक्षे कीर्तिरिति स्यात् न्यायतः, कीर्तेः सर्वत्र श्रूयमाणत्वात्। क्वचिदन्नमपि व्याचष्टे सायणः, पुनरिहापि नास्ति नियमः। 'क्रतुः' प्रज्ञा, अध्यवसायात्मकं प्राज्ञमिच्छाबलं वा सर्वत्र अन्तरर्थप्रतिपत्तौ। स्थूलपक्षे तु न नियमः। क्वचित् प्रज्ञा क्वचित् याज्ञिकं कर्म, अन्यत् किमपि स्वेच्छानुसारेण व्याहरति सायणः। 'ऋतम्' रहस्यार्थाधिगमे प्रधानतममिदं पदं, अन्तर्हितानां वेदार्थानां अधिगमाय प्रथमं द्वारमिति वक्तव्यम्। सत्यं आविर्भूतं सत्यं वा तद्धर्मो वा ऋतपदेनोच्यते, नान्यथा गूढार्थप्रकाशनपद्धतौ। स्थूलपक्षे क्वचित् ऋतमुदकं भवति, यज्ञो भवति, अन्यत्र अन्यत् किमपि भवति, किं वा न भवेन्निरङ्कुश-कर्मपरता-प्रतिपादनोत्साहसमीरिते सायणीये भाष्ये? एवमन्यानि पदान्यपि सङ्केतरूपं विनैव बाह्याभ्यन्तरार्थ-साधकानि वर्तमानानि यथावसरं ऋचां व्याख्यानेषु प्रसज्यन्त इति नेह विस्तर इष्यते। इदमत्रावधेयम्। इदमेव महद्बलं अन्तरर्थविवरणसरणेः, यद् ऋतादिपदानां एकैकस्यापि एकरूपतया नियमेनार्थग्रहणात् सर्वत्र गूढार्थानुसारेण तात्पर्यसङ्गतिः सुलभा लक्ष्यते। स्थूलपक्षरीत्या तु बहुषु स्थलेषु न केवलं भावदारिद्र्यं किं तु तात्पर्यमसङ्गतं च भवतीति पुरस्ताद्व्याख्याने दिङ्मात्रं वा प्रदर्शयिष्यामः॥

अथ सङ्केताः। ऋतादिपदान्यसङ्केतपदान्यपि अन्तरर्थसाधनान्युपपादितानि। अन्यानि पदानि सङ्केतरूपाणि गवाश्वघृतादीनि वर्तन्ते। एषामेकैकमपि आन्तरस्य प्रपञ्चस्य सत्यस्य भावस्य पदार्थस्य वा बाह्यं सङ्केतरूपं ज्ञेयं भवति। अत्र उदाहरणानि भवन्ति। 'गौः' इति विशिष्टं आद्यं पदम्। यद्यपि लोक इव वेदेऽपि गोपदं रश्मिः वाक् चतुष्पाद्विशेषः इत्याद्यर्थेषु वर्तते, तथाऽपि गूढार्थपक्षे किरणोपलक्षित-अन्तःप्रकाशार्थे प्रयुज्यते। तस्य सङ्केतः गौरिति चतुष्पाद्बाह्ये ग्राह्यः। यद्यपि गोपदस्य श्लिष्टतया द्व्यर्थः सिध्येत्, तथाऽपि सङ्केतरूपैव गौर्ग्राह्या, गोपर्यायधेन्वादीनां गोविकार-दुग्ध-घृतादीनां च सङ्केतरूपतया मन्त्रवर्णेषु प्रयोगबाहुल्यात्। तादृशस्थलेषु सङ्केतं उज्झित्वा तात्पर्यान्वेषणे लाभस्तु असत्यः शोचनीयश्च भवेत्। मन्त्रद्रष्टार ऋषयः

असम्बद्धप्रलापिन उन्मत्ता इति वा सिध्येत् । 'अश्वः' बलस्य सङ्केतः अद्यतने युगेऽपि नव्यानां व्यवहारे इयदश्वबलमिति बलप्रमाणगणनायां आहुः । इदं च बलसङ्केतभूतत्वं अश्वस्य चिरन्तनमिति सार्यम् । 'आपः' जीवनरसः तच्छक्तिविशेषाणां सृष्टिकार्यस्थितानां विश्वमूलतत्त्वशक्तीनां च सङ्केतः । 'नद्यः' 'सिन्धवः' सर्जनपोषणशक्तीनाम् । 'समुद्रः' अखण्डसत्त्वस्वरूपं, यस्मादुदेति सूर्यात्मा सत्यः । 'पर्वतः' पर्ववान् सानुमान् सृष्टस्य भूम्यादेर्जगतः बहुप्रस्थस्य उपर्युपरि सानव इवावस्थितस्य सङ्केतः । 'गुहा' रहस्यस्थानस्य, सर्वभूतमूलस्थानभूतस्य हृदयस्य सङ्केतः । इमानि बहिरुपस्थितानि वस्तुरूपाणि वेदकविभिः स्वोद्दिष्टानर्थान् आविष्कर्तुं निरायासेनोपयुक्तानीति सावधानावलोकने स्पष्टं भवेत् । अकृत्रिमधियां आदि-कवीनां अन्तरङ्गेषु समुद्रादीनामखण्डसत्त्वस्वरूपादिभिः पदं कृतमिति नात्र चित्रम् । तथा च, अपरिमेयत्व-गाम्भीर्यादिरखण्डद्रव्यसमृद्धिर्वा समुद्रस्य, निरन्तर-वहनाप्यायनादिशीलता सिन्धूनां, जीवनाधारता वा अपां, एवमन्येषामभितः सतां चराणां स्थिराणां वा गुणक्रियाविशेषाः सर्गस्य मूलतत्त्वानि सूक्ष्मगहनप्रदेशेषु विगाह्य अन्तरे प्रकृतौ देवताकार्य-विलसितानि पश्यतामृषीणां स्वानुभवसदृशाः सङ्केता अभूवन् । परदैवतं प्रति यात्रायां वेदकवेर्दर्शनप्राप्तानां सत्यार्थानां सूक्ष्माणामसाधारणभावानां आविष्करणाय स्थूलानि सरित्समुद्र-गवाश्वप्रभृतीनि निसर्गसिद्धानि बिम्बान्यप्रयास-प्रवृत्तान्यासन् । तथा मन्त्रवाग्भिर्गूढार्थानामाविष्करणं ऋषेः स्वोपयोगाय अन्येषां तादृशाध्वचराणामनुचराणां वा प्रयोजनायाक्लिपष्ट । इदं च सङ्केतबिम्बानां परमं प्रयोजनम् । तानि हि स्वभावैरिष्टार्थान् प्रतिपाद्य विवरणमन्तरेण गाढं संस्कारमात्मनि द्रष्टरि विदधते । उत्तरयुगेषु बुद्धिप्रधानेषु साहित्याभ्युदये भ्राजमानेऽपि बिम्बैर्विना प्रायो भावाविष्कारो न घटतेऽद्यापि । तत्रापि गुणक्रियाविशेषधर्मारोपणेन रूप्य-रूपकभवं प्रतिपाद्य इष्टमर्थं बोधयन्ति कवयः । वेदे तु सङ्केतरूपग्रहणेन रूप्ये रूपकधर्मारोपस्य नास्त्यवसरः । पर्वतबिम्बप्रदर्शनमात्रेण अचलत्व-जीवनप्रवाहप्रभवत्व-बहुप्रस्थाधिरोहसानुमत्त्व-उत्तुङ्गत्वादयः अनभिहिता एव साक्षादुपस्थिताः प्रभवन्ति हृदयं प्रवेष्टुम् । अपरं चेदं बोध्यम् । वेदनात्मकाद्भावादनुभव-विशेषाद्वा धीवृत्त्यात्मकं ज्ञानं (बौद्धेऽस्मदीये युग इव) न पृथक्कृतं वैदिके युगे, यत्र वेदनं बुद्धिः उभे अपि सुसङ्गते निरन्तरे चाभूताम् । यानि सत्यानि अवगन्तुं बुद्धिः प्रवर्तते, तानि स्वरूपावस्थितानि घनान्यनुभववेद्यानि भवन्ति, न पुनस्तानि केवलं वृत्त्यात्मकतया गृह्यन्ते ।

तस्मात् सत्यं घनं सर्वदा स्वरूपावस्थितं अनुभवैकवेद्यं धीवृत्तिभावना-विषयभूतं च भवति। यच्च सत्यमस्माकं प्रत्यक्षं भवति, यच्च भावनागोचरं वा, तद्वस्तुतः स्वरूपावस्थितं ज्ञेयं, तस्य बाह्यतलमेव नः प्रत्यक्षं भवति, तस्य भावनाऽपि छायेव विदूरा मानसी वृत्तिः। यत्किमपि सत्यं प्रति आद्यानामृषीणां बुद्धिस्थवृत्तेः हार्दभावस्य च साङ्गत्यात् भावानुभव-धीवृत्त्योर्द्वैधीभावव्यवहारस्य नासीत्प्राबल्यम्। ऋषिभिः प्रयुक्ताः सङ्केताः युगपदनुभव-धीवृत्त्योर्गोचराः समपद्यन्तेति सङ्केपार्थः ॥

अथ नैकविधाः सङ्केताः। प्रत्यक्षे स्थूले जगति स्थितानां पर्वतादीनां सङ्केतोपयोगित्वमुक्तम्। एषां सर्वेषां समानवर्गता ज्ञेया। प्रायशोऽयमेव सङ्केतवर्गः मन्त्रदृष्टिभूपयुक्तः प्रागस्माभिः व्याख्यातः, येनावगतेन गूढार्थप्रवेशपद्या सुगमा भवेत्। अन्यविधाश्च सन्ति सङ्केताः, ये च न भवन्ति बाह्यजगत्सम्बन्धिनः, किं तु ऋषिभिः चर्यमाणे रहस्याध्वनि लब्धाश्चार्थाः ज्ञानचक्षुर्दृष्टैः लोकान्तरसम्बन्धिभिः बिम्बैः भाषास्थानीयैरावेद्यन्ते। स्थूलात् जाग्रत्प्रपञ्चादुपरिष्टात् स्थितानां विपुलतरप्रज्ञाशक्ति-विलासक्षेत्रभुवां सम्बन्धिनो गहनार्थाः स्वयं ऋषिदृष्टैः बिम्बविशेषैराविर्भवन्ति। तस्मात् तादृशानां रूपाणामेवार्थाभिधायकत्वं सिद्धम्। तथाविधानि रहस्यानि ऋषेश्चक्षुषः प्रत्यक्षाणि भवन्ति। एतद्वर्गीयाः सङ्केताः देवताविशेष-वर्ण-वाहन-आकृति-व्यापारादिवर्णनपराः मन्त्रेषु लक्ष्यन्त इति बोध्यम् ॥

पुरा युगेषु प्राचीनमानुषवर्गेषु देवताराधनपद्धतिः सर्वथा सङ्केतरूपसमृद्धेति नास्ति संशयः। अद्यापि केचन बिन्दु-त्रिकोण-षट्कोण-मण्डलादयो यन्त्रपदवाच्याः तान्त्रिकाः सङ्केताः रहस्यार्थाः पूज्यन्ते। अन्ये पुनः पुराणागमप्रसिद्धाः त्रिशूल-शङ्ख-चक्र-गरुड-वृषादयः अद्यापि उपयुक्ताः सुप्रसिद्धाः, एतेषां सङ्केतानां क्वचित् पुराणेषु विवरणं लक्ष्यते। तान्त्रिकमूर्त्यादीनां सङ्केतार्थस्तत्र तत्र व्यक्तमव्यक्तं वा सूच्यते। ईदृशां सङ्केतानां पूर्वोक्तवैदिकसङ्केतानां च आधारतः प्रयोजनतश्च भेदो वर्तत इत्यवधेयम्। अस्य विषयस्य अत्रानुपयोगाद्विस्तरभिया च एतावतैव विरम्यते। सर्वथा वेदसूक्तार्थविचारे सङ्केतरूपार्थग्रहणं न्याय्यं सुतरामुपपन्नमित्यलं बहुनोक्तेन ॥

## अथ तृतीयः खण्डः

वेदरहस्यमधिकृत्य प्रतिपत्तव्योऽस्मत्पक्षः सविस्तरमुपन्यस्तः। गूढार्थ-विवृतौ

सङ्केतरूपपदार्थानां स्थानं सप्रमाणमुपपादितम् । वसिष्ठवामदेवादीनां मन्त्रद्रष्टय एवार्थ प्रधानं प्रमाणं वेदगूढार्थसिद्धान्तस्येति निरूपितम् । इतः परं वेदमन्त्रवर्णेभ्योऽन्यत्र वेदगुप्तार्थसिद्धान्तं गूढमगूढं वा सूचयन्ति प्रोद्भलयन्ति वा प्रमाणान्यस्मिन् खण्डे परीक्षेमहि । अत्र प्रथमं तावत् नैरुक्तानां मतमावेदयतो यास्कस्य कान्यपि वचनानि निरीक्षितव्यानि भवन्ति, प्रसङ्गतस्तस्याशयाः क्वचिदुल्लिखिताः पूर्वम् । अत्र तस्याभिप्रायान् सामान्यतो देवान् मन्त्रान् ऋषीन् मन्त्रार्थविवरणं चाधिकृत्य सारतो व्याचक्ष्महे । वेदार्थावगमाय मुख्यमङ्गं निरुक्तमिति प्रसिद्धम् । निरुक्तं च निर्वचनं वैदिकपदानां इति बोध्यम् । कानि तानि वैदिकपदानि भवन्ति येषां निर्वचनाय प्रवृत्तो यास्क इति चेदुच्यते । छन्दोभ्यः समाहृतानि स्वाध्यायात्परमार्थविचारायोपयुक्तानि निघण्टुपदवेदनीयानि चिरन्तनसम्प्रदायाध्ययन-क्रमागतान्येव निर्वचनविषयभूतानीति ज्ञेयम् । अत एव 'समाम्नायः समाम्नातः स व्याख्यातव्यः' इति पदानां आम्नानात् समाहारं द्योतयितुं समाम्नायपदेनोपक्रान्तं निरुक्तम् । पदसमुदायो निघण्टुः पदनिर्वचनं निरुक्तमित्युभयोर्विशेषो बोध्यः । तस्मान्नामलिङ्गानुशासनस्यामरसिंह इव न यास्को निघण्टुकारः, किं तु निरुक्तकार इत्यवधेयम् । तत्रापि बहूनां पूर्वेषां निरुक्तकाराणां मतं आश्रित्य तदुक्तीरुल्लिखन् यथामति व्यरचयन्निरुक्तग्रन्थम् । यद्यपि नैरुक्तपक्षः प्रायः स्थूलो बहिर्मुख इत्यसंशयं, तथाऽपि यास्कोक्तिषु केचनांशाः संलक्ष्यन्ते, ये च भवेयुः अवधानभाजनं वेदरहस्यजिज्ञासूनाम् । यद्यपि यास्कोक्तानि पदानां निर्वचनानि सर्वत्र उपपन्नानीति न शक्यं वदितुं, यद्यपि बहुषु स्थलेषु तन्निर्वचनानि निरङ्कुशकल्पनासाधितान्येवेति वाच्यं, तथाऽपि तत्प्रतिपादितं वेदपदानां यौगिकत्वं नैरुक्तमतं गूढार्थचिन्तकानाममूल्यं रहस्योद्घाटनद्वारं भवति । वेदपद-यौगिकत्वप्रतिपादकं नैरुक्तपक्षमवलम्ब्य वैदिकधर्मस्य पुनरुद्धाराय दयानन्दस्वामिभिः प्रवृत्तमिति स्मार्यम् । वेदगुप्तार्थविचारे वैदिकपदानां यौगिकत्वं मुख्य आधारस्तम्भ इत्ययं प्रथमोंऽशो अवधेयः । अन्यश्च भवति । वेदे वृत्तान्तान्वाख्याने, देवतानां बन्धुत्वादिवादे वा, न मुख्योऽर्थो ग्राह्यः । गौणी वृत्तिरेवाश्रयणीयेति नैरुक्तः पक्षः । इदं च गौणार्थाश्रयणमवश्यमभिमतं च अस्माकं वेदरहस्यार्थप्रकाशने । परं तु तात्पर्योपपादने सूक्ष्मोऽन्तरर्थो गृह्यतेऽस्माभिः, न तु बाह्यः स्थूलश्च नैरुक्तैरिव । मीमांसकानामपि स्वमतानुसारेण गौणाः शब्दा इति प्रसङ्गवशादुदाहृतं पूर्वं, इह तत् स्मार्यम् । 'स्वसुर्जारः शृणोतु नः' (ऋग्वेद– ६. ५५. ५.) ।

इत्यत्र व्याख्याने यास्क आह– "उषसमस्य स्वसारमाह साहचर्याद्रसहरणाद्वा" (नि. ३. १६.)। अन्यत्र इन्द्रशत्रुर्वृत्र इति वदन् आह– "तत् को वृत्रः? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः। अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते। तत्र उपमार्थेन युद्धवर्णा भवन्ति" (२. १६.)। यद्यपि बाह्यः स्थूल एव भावः परिगृह्यते निरुक्तकारेण, तथाऽपि वेदार्थविचारे गौणार्थाश्रयणस्याभिज्ञाः पूर्वे श्रुतर्षय इत्ययमंशोऽस्माकं मार्गदर्शीत्यनर्घमिदं तत्त्वम् ॥

एवं स्थूलमर्थं मन्त्राणां ब्रुवाणोऽपि दुरूहो दैवतनिर्णयः, दुरूहो वेदार्थबोध इति मन्त्रवर्णानुदाहरन् दृष्टान्तेन प्रतिपादयति– "शाकपूणिः सङ्कल्पयाञ्चक्रे सर्वा देवता जानामीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव। तां न जज्ञे। तां पप्रच्छ विविदिषाणि त्वेति। सास्मा एतामृचमादिदेशैषा मद्देवतेति" इति (नि. २. ८.)। अत्र यास्केनोदाहृता ऋक्– 'य ईं चकार' इति दीर्घतमसः अस्यवामीयसूक्तस्था (१. १६४. ३२.) "बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः, वर्षकर्मेति नैरुक्ताः" इति ऋचो विवरणमारभ्य पक्षान्तरगतं परिव्राजकीयं तात्पर्यमुल्लिखन् नैरुक्तं स्थूलमेव पक्षमुदाहरति। कर्मपर-व्याख्यानाचार्यः सायणोऽपि अस्यवामीयसूक्तं सर्वं अध्यात्मपरतया व्याख्येयमिति अभ्युपगच्छन् इमां ऋचमात्मवादिमतानुसारेण व्याख्यातवान्। यत्किमपि वा भवतु अस्या ऋचस्तात्पर्यं, यास्कोक्तित इदमवगम्यते। देवतास्वरूपावगमो दुर्लभः, देवता-प्रसादादेव सम्पाद्यः। शाकपूणेः प्रत्यक्षतां गतायामपि देवतायां, सा स्वस्वरूपं न व्यवारीत्। एवं किल सा प्रोवाच– "देवताः सर्वाश्च जिज्ञासितवानसि, अहमेव सर्वदेवता, मम यथार्थं स्वरूपं 'य ईं चकार' इत्यस्यामृचि प्रतिपादितम्। त्वं मन्त्रवर्ण-पद-निर्वचनप्रवीणोऽसि, तस्मादेतस्या ऋचः सकाशान्मामवेत्यावधारय" इति। दुरूहो वेदार्थबोध इत्युक्तं, इतश्च रहस्यमस्ति वेद इति स्पष्टम् ॥

तथैव यास्को वेदार्थनिर्णयोपयोगाय बहूनां तदानींतन-पक्षान्तराणां प्रामाणिकानां वादानखण्डयन्नुदाहरति। याज्ञिकाः, पूर्वे याज्ञिकाः, एके नैरुक्ताः, नैदानाः, परिव्राजकाः, ऐतिहासिका इत्येवमादीन् पक्षान् तत्र तत्र शंसति। अतो बहुप्रकारो मन्त्रार्थव्याहारस्तत्र अध्यात्मादिगूढार्थपक्षश्च विस्मृतप्राय एव यास्कनिरुक्त-प्रणयनसमय इति गम्यते। यद्यप्येवं, तथाऽपि ऋषीणां ऋषित्वमधिकृत्य मन्त्रप्रादुर्भावप्रकारं च "तदेनान् तपस्यमानान् ब्रह्म स्वयम्भु अभ्यनार्षत्" इत्यवोचन्निरुक्तकारः। अन्यत्र

मन्त्रार्थदुरूहत्वं प्रतिपादयन् द्वे ऋचौ उदाहरति– "उत त्वः पश्यन्न ददर्श वाचं उत त्वः शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः" (१०. ७१. ४.) । "उत त्वं सख्ये स्थिरपीतमाहुः नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥" (१०. ७१. ५.) । अत्र आद्ययर्चा मन्त्रार्थावगत्यै यत्नः कार्यः, अर्थावबोधशून्यः स्वाध्यायवान् स्थूलमेव मन्त्रार्थं पश्यन्नपि अन्ध इव भवति, तथा मन्त्रशब्दं शृण्वन्नपि मन्त्रशक्तिप्रबोधनाक्षमः बधिर इव भवति । यस्तु विज्ञः दृष्टिश्रुतिसम्पन्नः मन्त्ररहस्यं साक्षात्कर्तुमधिकारी भवति, तस्मै ऋगात्मिका वाक् स्वयंप्रकाशा भवति, यथा जाया पत्ये स्वं वपुरर्पयति तथेति उपमया प्रतिपादयति । एवमर्थावगतिरवश्या, न चेत् 'स्थाणुरयं भारहर' इति अनर्थज्ञो निन्दास्पदं भवतीति उपपादयति । अन्ययर्चा इदमवगम्यते । अस्याः दुर्गाचार्यव्याख्यानमनुसृत्य पदार्थान् अभिधाय तात्पर्यं प्रदर्शयामः । 'उत त्वं सख्ये स्थिरपीतमाहुः' इति । उत त्वं एकमपि सख्ये देवसख्ये देवानां समान-ख्यानतायां देवसायुज्य इत्यर्थः । "यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति" इति उत्तरत्राह यास्कः । तदत्र अनुसन्धेयम् । कमिति आहुः? स्थिरपीतं इति । अप्रच्यवनधर्माणं विज्ञातार्थं इत्यर्थः । क एवमाह? इयमेव वाक् ऋक्संज्ञिका । 'नैनं हिन्वन्त्यपि वाजिनेषु' एनं वागर्थज्ञं बलवत्स्वपि वाग्-ज्ञेयेष्वर्थेषु दुर्ज्ञेयेषु दुरवघटनीयेषु समुद्रपिहित-रत्नसन्निभेषु देवतापरिज्ञानादिषु व्याकर्तव्येषु अन्ये अनुगन्तुं न शक्नुवन्ति । उत्तरेणार्धर्चेन अविद्वान् निन्द्यते । एषः अविद्वान् अधेन्वा मायया चरति, अस्मै एषा वाग्धेनुः कामान् न दुग्धे । यः अफलां अपुष्पां वाचं अन्येभ्यः सकाशात् श्रुतवान्, अध्ययनादृते नास्ति किमपि मृग्यमिति शब्दमात्रं श्रुत्वा दृढग्रहेणावस्थितो भवति, तस्य अपुष्पा अफला च वाग्भवति ॥

अत्र यास्कः "याज्ञदैवते पुष्पफले देवताध्यात्मे वा" इत्याह । अत्र निरुक्त-व्याख्यातार आहुः– 'यज्ञे भवं ज्ञानं याज्ञं, देवतासु भवं दैवतम् । आत्मन्यधि यद्वर्तते तदध्यात्मम् । यज्ञपरिज्ञानं देवता-परिज्ञानं आत्मपरिज्ञानं च । एतदेव समस्तवेदप्रतिपाद्यम् । तत्र यद्यभ्युदयलक्षणो धर्मोऽभिप्रेयते, तदा दैवतार्थत्वाद्याज्ञं दैवतं फलम् । फलार्थं हि पुष्पं भवति पूर्वम् । यदि पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते, तदोभे याज्ञदैवते पुष्पत्वमेव बिभृतः । दैवते हि तदर्थत्वाद्याज्ञमन्तर्भूतमेवेति दैवतं पुष्पं अध्यात्मं फलम्' ॥

सर्वथा त्रिविधं परिज्ञानं अधियज्ञ-अधिदैवत-अध्यात्माख्यं मन्त्रवर्णेभ्यो लब्धव्यं इति यास्को मन्यते। अविस्पष्टार्थाश्च मन्त्रा इति चेन्नैष स्थाणोरपराधो यदेनमन्धो न पश्यतीत्याह। अन्यश्च स्वकालिकमैतिह्यं स्मरति निरुक्तकारः। ऋषयः साक्षात्कृत-धर्माणः अवरेभ्योऽसाक्षात्कृत-धर्मभ्यः उपदेशेन मन्त्रान् सम्प्रादुरिति। उपदेशेनेत्याह। अत्र वेदरहस्यनिर्देशकं कमपि चिरन्तनं गूढसम्प्रदायमेवाभिप्रैतीति ज्ञायते। अत एव तस्यास्तपसा पारमीप्सितव्यमिति व्याहरति ग्रन्थस्यान्ते। इतश्चास्ति रहस्यं वेद इति असन्दिग्धम् ॥

अथ मन्त्ररहस्य इव देवतारहस्येऽपि श्रद्धा यास्कस्येति प्रागुदाहृताभिस्तदुक्तिभिः अवगतं भवति। अन्ते च देवता अधिकृत्य तदुक्तयो देवगुह्यार्थसिद्धान्तस्यानुकूल्य-सम्पादिका इत्यवधेयम्। तथा चाह– "माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते, एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति। इतरेतरजन्मानो भवन्तीतरेतरप्रकृतयः कर्मजन्मान आत्मजन्मान आत्मैवैषां रथो भवति, आत्मा अश्वाः, आत्मा आयुधं, आत्मेषवः, आत्मा सर्वं देवस्य देवस्य" इति (७. ४.)। एवं यास्कः पक्षान्तराणि प्रामाणिकत्वेन यथावसरमुदाहरन्नपि मन्त्रेभ्यस्त्रिविधपरिज्ञानं प्रतिपाद्य अध्यात्मपक्षपारम्यं अभ्युपगच्छतीत्यवधेयम्। इदं च पोद्बलयति वेदरहस्यार्थसिद्धान्तम् ॥

अथ च साध्वेवेदं यत्प्रामाणिकतया शंसति पूर्वेषां नैरुक्तेतरपक्षिणां वा वचनानि यास्कः, तथाऽपि नासौ सतृणाभ्यवहारी। यत्र माननीयेष्वपि पूर्वेषां वचनेषु असाधु पश्यति, तत्र निःशङ्कं दोषं दर्शयति। अत्रैकमिदं निदर्शनं भवति– "वनेन वायो न्यधायि" (ऋ. १०. २९. १.)। अस्यामृचि 'वायः' इति एकं पदं द्विधा कृतं पदपाठकारेण तदसाध्विति आह– "वेति च य इति च चकार शाकल्यः। उदात्तं त्वेवमाख्यातं अभविष्यत्, असुसमाप्तश्चार्थः" (नि. ६. २८.) इति। ऋक्संहितापदपाठकारः शाकल्यः। यद्यप्येवं वेदपदपाठकारेऽपि दोषदर्शनं प्रयुज्यते, तथाऽपि विशृङ्खलत्वं नेष्यते, यन्मन्त्राणां परमं प्रामाण्यमभिमन्यते। परं तु यथा मन्त्रान् प्रमाणदृष्ट्या पश्यति, तथा ब्राह्मणानि तत्र तत्रोदाहरन्नपि नाद्रियते। तथा च दैवतकाण्डे वैश्वानर-प्रस्तावे "बहु-भक्तिवादीनि हि ब्राह्मणानि भवन्ति" इत्याह (नि. ७. २४.)। भक्तिर्नाम गुणकल्पना येन केनचित् गुणेन ब्राह्मणं सर्वं सर्वथा ब्रवीति तत्र तत्त्वमन्वेष्यमेव भवतीति यास्क-व्याख्यातारः। तस्मात् सविचारमेव पूर्वेषां वचनानि परीक्ष्य परिग्राह्याणीत्येवमर्थकानि

निरुक्तकारवाक्यानि स्मर्तव्यान्यस्माकं वेदरहस्यार्थविवरणप्रसङ्गे । इयानुपकारकोऽस्माकं यास्क इति प्रदर्शितम् । इतश्चास्ति रहस्यं वेदे मार्गितव्यं, प्रकाशयितव्यम् ॥

बहूनां ब्राह्मणवचनानां चाटुकारवचनत्वेनाप्रामाण्यं यथा यास्कः पश्यति तथा शौनकीय-बृहद्देवता यास्कोक्तिषु दोषं दर्शयति– "पदमेकं समादाय द्विधा कृत्वा निरुक्तवान् । पुरुषादपदं यास्को वृक्षे वृक्ष इति त्वृचि ॥" इत्यादिभिः । (बृहद्देवता- २. ११२–११६ ) । यास्क इव बृहद्देवताऽपि मन्त्रार्थविवरणे मतभेदानाह । तत्राप्यात्मवादिपक्षमुदाहरति । निदर्शनाय पञ्चजनचर्चा अत्रोदाहरामः– (७. ६७–७२.)

"शालामुख्यः प्रणीतश्च पुत्रो गृहपतेश्च सः ।
उत्तरो दक्षिणश्चाग्निरेते पञ्चजनाः स्मृताः ॥
मनुष्याः पितरो देवा गन्धर्वोरगराक्षसाः ।
गन्धर्वाः पितरो देवा असुरा यक्ष-राक्षसाः ॥
यास्कौपमन्यवावेतान् आहतुः पञ्च वै जनान् ।
निषाद-पञ्चमान् वर्णान् मन्यते शाकटायनः ॥
ऋत्विजो यजमानश्च शाकपूणिस्तु मन्यते ।
होताध्वर्युस्तथोद्गाता ब्रह्मा चेति वदन्ति तान् ॥
चक्षुः श्रोत्रं मनो वाक् च प्राणश्चेत्यात्मवादिनः ।
गन्धर्वाप्सरसो देवा मनुष्याः पितरस्तथा ॥
सर्पाश्च ब्राह्मणे चैव श्रूयन्ते ह्यैतरेयके ।
ये चान्ये पृथिवीजाता देवाश्चान्येऽथ यज्ञियाः ॥"

एवं षड्भिः श्लोकैः पञ्चजनशब्दतात्पर्य-विकल्पानुपन्यस्यति । अनेन निरुक्त-बृहद्देवतादिभ्यः पूर्वं अध्यात्मादिरहस्यवादिनां मन्त्रार्थविवरणं पक्षान्तरविवरणेभ्यो विभिन्नं विदितचरमिति गम्यते । इतश्चास्ति वेदे रहस्यं, यस्याधिगमः सङ्केतगुप्तार्थ-पक्षावलम्बनेन सिद्धो भवतीति वयम् ॥

प्रागुक्तं ब्राह्मणान्येव यज्ञस्य सङ्केतरूपतां प्रतिपादयन्तीति । इतश्च वेदे रहस्यं अस्तीति प्रत्ययो ब्राह्मणेषु स्पष्टं दृश्यते । न चेत् "यजमानो वै यूपः" इत्याद्याः सङ्केताः नाभविष्यन् । अत्र दीक्षिष्यमाणस्य यजमानस्य अञ्जनेन समर्धनं ततः प्राचीन-

वंशप्रवेशनं चाधिकृत्य शरीरस्थस्यैव दीक्षितस्य यजमानस्य नव्यजन्म-सम्पत्तिर्भवति इत्येवमर्थकानि वाक्यानि ब्राह्मणान्याहुः । तथा च ऐतरेयिणः "पुनर्वा एतं ऋत्विजो गर्भं कुर्वन्ति यं दीक्षयन्त्यद्भिरभिषिञ्चन्ति" इति प्रकृत्य "शुद्धमेवैनं तत्पूतं दीक्षयन्ति दीक्षितविमितं प्रपादयन्ति । योनिर्वा एषा दीक्षितस्य यद्दीक्षितविमितं योनिमेवैनं तत्स्वां प्रपादयन्ति" (१. ३.) इत्यामनन्ति । दीक्षितविमितमित्यत्र प्राचीनवंशप्रवेशेन स्वकीययोनिप्रवेश इति सायणभाष्यम् । अन्यत्र "आहुतिभ्यः सम्भूय हिरण्यशरीरः स्वर्गं गच्छति" इत्युक्तम् । अग्निरेव देवयोनिरिति च । अन्यच्चेदं प्रसक्तिवशादुदाहर्तव्यम् । याज्ञिकपक्ष-परमाधारभूतानि ब्राह्मणान्येव अध्यात्मादिरहस्यविज्ञानं विना नैव सिध्यति देवतासायुज्यं स्वर्गारोहो वेत्युपदिशन्ति । तथा च शतपथब्राह्मणम्— "तदेष श्लोको भवति । विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विन इति न हैव तं लोकं दक्षिणाभिर्न तपसाऽनेवंविद् अश्नुत एवं विदाँ हैव स लोकः" (१०. ५. ४-१६.) । प्रथितेषु कर्मकाण्डग्रन्थेष्वेवमध्यात्मविद्यारहस्यानि तत्र तत्र घोषयत्सु, किमु वक्तव्यं ज्ञानकाण्डमुद्रया प्रथिता आरण्यकोपनिषदः वैदिकाध्वरस्य परमार्थं अन्तर्यजनपरमेव व्याचक्षत इति? "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्मं" इत्यादीन्यारण्यकवचनान्यत्र द्रष्टव्यानि भवन्ति ॥

अथ चेदं वक्तव्यमुपनिषद्ग्रन्थानधिकृत्य । यद्यपि औपनिषदर्षयस्तपोनिष्ठाः सत्यजिज्ञासया ब्रह्मावगतये स्वतन्त्रतया प्रवृत्ता इति निरूढः प्रत्ययः प्रायो न्याय्य इति अभ्युपगच्छामः, तथाऽपि मन्त्रवर्णा अध्यात्मविद्यादि-रहस्यगर्भिता इति विदितं तेषाम् । अत एव स्वीयानि दर्शनानि तदाधारेण प्रतिपादितानि तत्त्वानि तत्र तत्र ऋग्भिः पुरातनर्षिदृष्टिभिः दृढीकुर्वन्ति । 'तदृचाऽभ्युक्तम्' 'तदुक्तमृषिणा' इत्यादीनामौपनिषदवाक्यानामिदमेव तात्पर्यम् । क्वचिदुपनिषदुपदिष्टानामर्थानां साक्षादृङ्मूलकत्वं स्पष्टं लक्ष्यते । वेदरहस्यदर्शिभिररविन्द-श्रीचरणैरत्रैकं निदर्शनं दर्शितम् । तदिदमाचक्ष्महे— 'हिरण्मयेन पात्रेण' इत्यादीनां ईशावास्योपनिषत्पङ्क्तीनां 'ऋतेन ऋतं अपिहितं' (ऋग्वेद- ५. ६२. १.) इति आत्रेयस्य श्रुतविदो मन्त्रद्रष्टुश्च समानोऽर्थ इत्यत्रोपपाद्यते । प्रथमं ऋचं पदपाठक्रमेणोदाहृत्य व्याख्यास्यामः । ततः परं उपनिषद्वाक्येन ऋगर्थसङ्गतिं प्रदर्शयिष्यामः—

"ऋतेन ऋतं अपिहितं ध्रुवं वां सूर्यस्य यत्र विमुचन्ति अश्वान् । दश शता सह

तस्थुः तदेकं देवानां श्रेष्ठं वपुषां अपश्यम् ॥" पदार्थविवरणम्– 'सूर्यस्य' सर्वप्रेरकस्य परमस्य देवस्य सवितुरिति यावत् । 'ऋतं' स्वरूपभूतं परमं सत्यम् । 'ऋतेन' विश्वात्मकतयाऽवस्थितेन अपरार्धपदवाच्य-त्रैलोक्यरूपेण अवरेण सत्येन 'अपिहितं' आच्छादितं अपश्यं इति सम्बन्धः । 'यत्र' यस्मिन् परमे सत्ये 'वां' युवयोः मित्रावरुणयोः स्थानं 'ध्रुवं' स्थिरं नित्यं वा भवति तदित्यर्थः, यत्र 'अश्वान् विमुचन्ति' किरणान् व्यूहीकृत्य व्यवस्थापयन्ति । यत्र च 'दशशता' सहस्र-सङ्ख्याकाः रश्मयः 'सह तस्थुः' सम्भूय एकत्र स्थिताः । 'देवानां वपुषां श्रेष्ठं तद् एकम्' देवतातनुबन्धानां वपुष्मतां देवानां वा वरेण्यं कल्याणतमं रूपं विश्वाध्यक्षं विश्वातीतं च 'तत्' ऋषिषु प्रसिद्धं तत्पदवाच्यं 'एकम्' अद्वितीयं जाज्वल्यमानं दुर्दर्शं सत्यस्वरूपं अपश्यं इति सम्बन्धः ॥

अत्रेदमवधेयम्– 'वां' युवाभ्यां स्थितं इति सायणः । 'वां' युवयोः स्थानमिति वयम् । उभयथाऽपि अध्याहार इष्यते । मित्रावरुणयोः स्थानं सूर्यमण्डलमित्यपि निर्विवादम् । 'ऋतेन' उदकेन आच्छादितं 'ऋतं' सूर्यबिम्बं ऋषिरहमपश्यमिति ब्रूत इति सायणः । परमे व्योमनि अक्षरपदवाच्ये चिद्घने भ्राजमानं सूर्यपदसङ्केतितं तत्पदवाच्यं अद्वितीयं परं सत्यं 'वरेण्यं भर्गः' 'तद्विष्णोः परमं पदम्' 'सर्वधातमं श्रेष्ठम्' इति मन्त्रदृष्टिषु महितं ज्योतिरपश्यमित्याह ऋषिरिति वयम् । 'अश्वाः' दश शतानि रश्मय इति सायणः । अभिमतमेवेदमस्माकम् । परं तु सूर्याश्वान् मन्देहादिभिरसुरैः निरुद्धान् स्तोतारः स्तुतिभिर्विमोचयन्तीति गाथावादैस्तात्पर्यमाह सायणः । रश्मिपदोपलक्षित-सत्यज्योतिष्प्रभाणां व्यूहनं समूहनं च विमोचन-सहस्थान-आख्यानाद् अवगन्तव्ये, इति वयम् । 'देवानां वपुषां' इत्यत्र वपुष्मतां इति मत्वर्थलक्षणा सायणस्य अपि अभिमता । 'ऋतेन ऋतम्' इत्यत्र कथमिदं ऋतद्वयमुच्यते? ब्रूमः । ऋतसत्यपदयोरविशेषेण लोके प्रयोगः वेदेऽपि क्वचिद्दृश्यते । वस्तुतस्तु विशेषो ग्राह्यः । यद् ध्रुवं परं सत्स्वरूपं तत् सत्यपदवाच्यं भवति । यत् प्रत्यक्षं सत्यादाविष्कृतं सत्यानुरुद्धं सत्यानुरोधेन प्राप्तसत्ताकं सत्यप्रतिनिधीभूतं वा तद् ऋतपदवाच्यं भवति । अस्यामृचि ऋतपदं सत्यपरमेव व्याख्यातम् । उभयमपि ऋतं सत्यमेव भवति । एकं परं सत्यं परार्धगतं परमव्योमशब्द-व्यवहार्यं ध्रुवम् । तच्च सत्यं अवरेण सत्येन अपरार्धगतेन अपिहितमित्युक्तम् । अत्र मेघ एव पिधानं भवति सूर्यस्य, तदपाये सूर्यमपश्यदृषिरिति सायणः । मेघापाये सूर्यदर्शनस्य ऋषित्वं नापेक्षितं, सामान्य-चक्षुष्मत्त्वमेवेष्यते ।

एवंविधव्याख्यानबलादेव साधवो वेदर्षयः सर्वसाधारणसूर्यदर्शनेऽपि किमपि विचित्रं पश्यन्तो मुह्यन्ति देवानांप्रिया इति आधुनिकप्रवादश्चेत्, किमत्र चित्रम्?

सृष्टिगतेन अवरेण सत्येन इतः परस्तात् स्थितं उत्तमं ध्रुवं सत्यं आवृतं, अस्य अपावरणे तस्य परस्य साक्षात्कार इति स्पष्ट एव भवति भावः। मित्रावरुणयोः स्थानं सूर्यमण्डलं इति स्थूलं व्याख्यानं सायणस्य। उभयोः सत्यरक्षकत्वं सत्यधर्मत्वं परमव्योमवर्तित्वं च उद्घोषयन्ति मन्त्रवर्णाः। 'ऋतस्य गोपावधि तिष्ठथो रथं सत्यधर्माणा परमे व्योमनि' (ऋग्वेद- ५. ६३. १.) इत्येवंजातीयकैर्मन्त्रैर्मित्रावरुणयोर्नित्य-सत्यसूर्यात्मत्वं अवगन्तव्यम्। ऋतेनेति ऋगियं व्याख्याता। सायणीया व्याख्याधोरणी किंचित्प्रदर्शिता अस्मदीया च। ऋचोऽस्यास्तात्पर्यमवबुध्य औपनिषदार्षिः अगूढया भाषया स्पष्टमाह— 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये॥ पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजो यत्ते रूपं कल्याणतमं तत् ते पश्यामि। योऽसावसौ पुरुषः सोऽहमस्मि॥' इतीशोपनिषद्वाक्यपङ्क्तयः। बह्वृचमन्त्रेण उपनिषन्मन्त्रस्य सङ्गतिरिह दर्शिष्यते॥

'ऋतेन' (अवरेण) वेदे, 'हिरण्मयेन पात्रेण' उपनिषदि। अवरत्वेन पिधायकत्वेऽपि सत्यत्वात् भास्वरहिरण्मयत्वं पिधानपात्रस्येत्यवधेयम्॥

'ऋतं अपिहितम्' वेदे, 'सत्यस्य मुखं अपिहितम्' उपनिषदि। 'वपुषां श्रेष्ठं' वेदे, 'कल्याणतमं रूपं' उपनिषदि। तच्च तेजः परं ज्योतिरस्मात् परस्ताद् ध्रुवं ज्ञेयम्॥

'तद् एकम्' वेदे, 'सोऽहमस्मि' उपनिषदि॥

'दश शता' रश्मय इति वेदे, (सायणोऽपि तथा व्याचष्टे) 'रश्मीन्' इत्युपनिषदि विस्पष्टमुक्तम्। 'विमुचन्ति' वेदे, 'व्यूह' इत्युपनिषदि। 'सह तस्थुः' वेदे, 'समूह' इत्युपनिषदि। चिद्घन-सत्य-ज्योतिर्मयः परमः पुरुषः सूर्यशब्दसङ्केतितः सर्वदा वेदे, प्रायशस्तथैवोपनिषत्स्वपीति बोद्धव्यम्। तदलमिदमेकं निदर्शनं इदानीम्। एतादृशानि अन्यानि च निदर्शनानि सन्ति, यैरुपनिषत्सु प्रतिपादितानां तत्त्वानां ऋग्वेदमन्त्रैः साक्षात्सम्बन्धः शक्यो निरूपयितुम्। वेदमन्त्रानधिकृत्य कर्मपरव्याख्यातुर्याज्ञिकधौरेयस्य सायणस्य यादृशं ज्ञानं तद्व्याख्याने लक्ष्यते, तादृशादपि सूक्ष्मतरः महीयो यथार्थं च ज्ञानं उपनिषत्तत्त्वदर्शिन ऋषेर्लक्ष्यत इति स्पष्टम्। किमु वक्तव्यं अधुनातन-

पाश्चात्यपण्डितानां तदनुसारिणां वा ज्ञानात् विशेषतः प्रशस्ततरं च ज्ञानमौपनिषदर्षीणां इति ?

इतश्चास्ति रहस्यं वेद इत्यसन्दिग्धम् ॥

अथ पुराणान्यपि वेदप्रशंसापराणि सर्वाणि वेदार्थस्योपबृंहणानि इति । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' 'पुराणं नष्टशाखस्य वेदार्थस्योपबृंहणम्' 'आख्यानं कथितं भूप पुराणं वेदसम्मितम्' इत्येवंजातीयकैर्महाभारत-पुराणेतिहासवाक्यैरवगम्यते । वेदेषु श्रूयमाणानां वृत्तान्तान्वाख्यानानां गूढार्थमत्र स्पष्टमाह महाभारतम् । क्वचिदाख्यानस्य वैदिकस्य गूढार्थो विस्पष्टो लक्ष्यते महाभारते । पूर्वेभ्य ऋषिभ्यः यथाश्रुतं वृत्रवधरहस्यं युधिष्ठिराय व्यासः प्राह । इमाश्च पङ्क्तयोऽश्वमेधपर्वणि लक्ष्यन्ते— (अ०. ११. श्लो०. ७-२०) 'ततो वृत्रं शरीरस्थं जघान भरतर्षभ । शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम् ॥' तत्रैव 'इदं धर्म्यं रहस्यं च शक्रेणोक्तं महर्षिषु । ऋषिभिश्च मम प्रोक्तं तन्निबोध जनाधिप ॥' इति । वज्रं विवेक इति व्याख्याता नीलकण्ठः, तम एव वृत्र इति चाह— 'रथन्तरेण साम्ना तं वसिष्ठः प्रत्यबोधयत् ।' (श्लो०. १९.) । रथं मायाख्यं विग्रहं तरतीति रथन्तरपदार्थं व्याचष्टे नीलकण्ठः । रथन्तरेण साम्ना वसिष्ठः प्रत्यबोधयदित्युक्तम् । यः को वा भवतु रथस्य सङ्केतार्थः । स नेह विचार्यते । सङ्केत एवेति तु यन्मन्यते व्याख्याता तदेवावधेयम् । महाभारतमपि इदं सर्वं वृत्रचरित्रं रहस्यमित्याह । तदपि लक्षणीयम् । अन्यत्रानुशासनपर्वणि (अ०. ८४. श्लो०.४७-४८.) मेषादीनां सङ्केतार्थत्वं प्रतिपाद्यते— 'अजोऽग्निर्वरुणो मेषः सूर्योऽश्व इति दर्शनम् । कुञ्जराश्च मृगा नागा महिषाश्चासुरा इति ॥ कुक्कुटाश्च वराहाश्च राक्षसा भृगुनन्दन ।' इत्येवंव्यक्तीनि वाक्यानि वेदगुप्तार्थ-सङ्केतरहस्यावगतये महाभारतकारकृत-परिश्रमस्य फलभूतानीत्यलं परमुक्तेन ॥

अध्यात्मविद्यादिरहस्यमस्ति वेद इति सप्रमाणमैतिह्यं निरूपितम् । सारतः स्थालीपुलाकन्यायेन पुराणेतिहासेभ्यः निरुक्तादिग्रन्थेभ्यस्तथा आरण्यकसहितब्राह्मणेभ्यः मन्त्रवर्णेभ्यश्च प्रमाणप्रपञ्चः प्रदर्शितः । अत्रान्यो मुख्यः प्रश्नः परीक्षामपेक्षमाणोऽवशिष्यते । वेदर्षिभ्यः परं अस्माकं प्राक् च अन्तरे द्राघीयसि काले अपि न कोऽपि वेदरहस्यविज्ञः रहस्याविष्काराय वेदव्याख्यानं न्यबध्नात् ? सरलमस्योत्तरं वचो भवति । तथाविधं गुप्तार्थप्रकाशकं व्याख्यानं न दृश्यत इत्यसंशयम् । तावता नैवास्ति रहस्यं,

अस्ति चेत् तद्विवरणं वर्तेतैवेति नैवं चोद्यम् । सायणात्पूर्वं सम्पूर्णं वेदव्याख्यानं नैव अलक्षीति हेतोः वेदानां कर्मपरत्वमैतिह्यं नैवासीदिति को वा ब्रूयात्? एवं वेदरहस्य-विवरणमध्यात्मपरं व्याख्यानं नाभूदिति हेतोः रहस्यार्थपरमैतिह्यं नासीदिति न वक्तुं युक्तम् । अपि तु, रहस्यार्थपर-व्याख्यानस्य प्रातिकूल्यं कर्मपारम्यप्रसिद्धौ द्रष्टव्यम् । अत्र सायणव्याख्यानैकप्रत्ययनेय-बुद्धितैव वेदगुप्तार्थ-विचारप्रतिकूलेत्यवगन्तव्यम् । रहस्यार्थपक्षश्चिरन्तने विस्मृतेऽपि तन्निर्देशकं ऐतिह्यं तु जाग्रदसन्दिग्धमिति प्रमाण-पूर्वकं प्राक् प्रदर्शितम् । तन्न पुनर्वक्तव्यम् । एवमपि न कोऽप्यासीद्वेदानामध्यात्म-परत्वपक्षस्योज्जीवनाय प्रवृत्त इति न शक्यं वदितुं आचार्यमध्वग्रन्थेषु जाग्रत्सु । यत् सायणात् किञ्चित्पूर्वं आनन्दतीर्थ आचार्यः ऋङ्मन्त्रतात्पर्य-परिग्रहस्य प्रकारोपप्रदर्शनाय ऋक्संहितायाः प्रथममण्डलीयानि चत्वारिंशत्सूक्तानि व्याचख्यौ । वैदिकधर्माचरणे कर्मानुष्ठानस्यावश्यकतया कर्मपरव्याख्यानं मन्त्राणां साध्विति, कर्मकरणमेव मन्त्राणां मुख्यं तात्पर्यमिति मतमसाध्विति च मध्व आचार्यो मन्यते । मन्त्राणामध्यात्मपरोऽर्थो मुख्यः, सर्वेषां वेदानां विष्णुपदप्राप्तिरूप-परमपुरुषार्थे तात्पर्यमिति च प्रतिपादयति आचार्यः । लघु-विस्तरं माध्वमृग्भाष्यम् । विरलान् मध्वसम्प्रदाय-पण्डितानन्तरा प्रायशो वेदविचारिणामविदितमेव तादृशं असमग्रमपि अस्त्येव वेदभाष्यमिति । तदनु-सारिणा महानुभावेन श्रीराघवेन्द्रस्वामिना योगीन्द्रेण आचार्यस्य भाष्यमनुसृत्याशयान् विशदयन्ती मन्त्रार्थमञ्जरी नाम व्याख्या निबद्धा । अग्न्यादि-देवतापरतया तदन्तर्गतपर-देवताभूत-विष्णुपरतया अध्यात्मपरतया च ऋचो व्याख्येयाः किल । यद्यपि तदुक्त-त्रिविधार्थप्रकारपरीक्षायै न वयं प्रवृत्ताः स्मः, तथाऽपि कथमर्थत्रयं ऋचां सिध्यति अस्मिन्नर्थाविष्कारनय इति समासतो ब्रूमः । आवश्यकस्थलेषु मन्त्रार्थमञ्जरीवाक्यान्येव उद्धृत्योदाहरिष्यामः—

"द्विविधा ह्यग्न्यादिशब्दाः । नीरसंवलितक्षीरवत् अयःपिण्डसमारूढवह्निवच्च । अग्न्यादिजीवचिता संवलितं यद्भगवच्चिद्रूपं विशिष्टं सपिण्डं तद्वाचिनः केचित् । केवल-शुद्धचिद्वाचिनः केचित् । शुद्धचिद्वाचिनोऽपि क्वचिद्भगवच्चिद्वाचिनो जीवचिद्वाचिनश्च इति द्वेधा । तत्राद्याः 'अग्निमीळे' इत्यादौ प्रसिद्धाग्न्यादिदेवं विष्णुं च परम-मुख्य-मुख्य-वृत्तिभ्यां, 'गङ्गायां मीन-घोषौ' इत्यत्र मुख्यामुख्य-वृत्तिभ्यां प्रवाहतीर-रूपार्थद्वयं गङ्गापदमिव, 'राजा कुवलयोल्लासी' इत्यादौ रूढि-योगाभ्यां कुमुद-भूवलयरूपार्थद्वयं

कुवलयपदमिव युगपदेव व्युत्पत्तिमतः प्रत्याययन्ति ।" एवं ऋक्सूक्तमन्त्राणां कर्मसु विनियोगार्थं मन्त्रप्रतिपादिताग्न्यादिदेवतापरं अग्न्याद्यधिष्ठानभूत-विष्ण्वाख्य-परदैवतपरं च तात्पर्यं परिग्राह्यमिति श्रुति-स्मृति-पुराणेतिहासवचनैरुपपादितम् । एवं सति, विष्ण्वर्थत्वेनैवालं, किं अग्न्यादिदेवतापरत्वेनापीति चेन्नेत्याह– 'तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः । प्रयोजनबहुत्वेन तस्य तस्याविरोधतः ॥ उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते । इत्यत्र अग्न्यादिदेवतास्वरूपसिद्ध्यादिबहुप्रयोजनाय तत्तद्देवतार्थकस्य आवश्यकत्वोक्तेः, निगम-निघण्टुव्याकरणादि-सिद्धव्युत्पत्ति-लभ्याग्न्यादि-देवतार्थकत्वस्य त्यागायोगाच्च ।' एवं अग्न्यादिदेवतायां मुख्यत्वं परमदेवे विष्णौ परममुख्यत्वं च प्रतिपादयत्याचार्यः, आह च– "न चैवमुभयत्र तात्पर्ये तात्पर्यभेदात् तन्निबन्धन-वाक्यभेदः शङ्क्यः । महातात्पर्यार्थस्यैकत्वात् । 'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत् सर्वागमानां पुरुषार्थस्ततोऽन्तः' इति पैङ्गिश्रुतिमुदाहृत्य पुराणवाक्यैश्च प्रोद्बलयत्येवम्– 'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि । सर्वेषामपि वेदानामितिहास-पुराणयोः । प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते ॥" इति । तस्मान्महातात्पर्य-अवान्तरतात्पर्य-भेदेन अनेकार्थकत्वमुपपाद्य अग्निवाय्वादिसूक्तानां अग्न्यादिदेवतापरं तदधिष्ठान-विष्णु-परमात्मपरं अन्तरर्थं अध्यात्मपरं च त्रेधा मन्त्रा व्याख्येया इति मन्त्रार्थविवरणप्रकारश्च चत्वारिंशत्सूक्तैर्व्याख्यातैर्निरूपितः । अग्न्यादिसूक्तैर्भगवदुपासकानां अग्न्याद्यधिष्ठानेषु एव भगवतोऽनुस्मर्तव्यत्वं अभिव्यज्यमानत्वं प्राप्यत्वं इति निमित्तत्रयेण इदं अग्निसूक्तं इदं वायुसूक्तमिति देवताभेद-सूक्तव्यवस्थोपपत्तिरवगन्तव्या । अथ [illegible] प्रदर्शनाय मन्त्रार्थमञ्जरीवाक्यान्युपयुज्य 'अग्निमीळे' इति ऋचोऽर्थं सङ्क्षेपेणोदाहरामः–

'अग्निमीळे' इति आग्नेयं सूक्तम् । अस्य ऋषिः मधुच्छन्दाः । विनियोगो विष्णुप्रीतिद्वारा मोक्षे, अवान्तरविनियोगः कर्मणि । अत्र विस्तरभयाद् व्याकरण-प्रक्रियाविस्तरान् प्रायशोऽनुक्त्वा सारत एव राघवेन्द्रस्वामिभिः प्रतिपादितानर्थान् आचक्ष्महे– 'अग्निं' अग्रे भवं प्रथमपूज्यं प्रथमप्रवर्तकं वा अग्निनामकं विष्णुं तदधिष्ठानं प्रसिद्धाग्निं वा 'ईळे' स्तौमि । अग्निविशेषणान्येवं व्याख्यायन्ते । 'पुरोहितम्' अनादितः सर्वप्राणिनामनुकूलं 'यज्ञस्य ऋत्विजम्' जातावेकवचनं, यज्ञानां ज्योतिष्टोमादीनां कर्तृतया ऋत्विङ्नामकेषु अध्वर्यु-होतृ-उद्गातृप्रभृतिषु नियामकतया स्थिततया 'तदधीनत्वात्

तदर्थवत्' इत्युक्तन्यायेन ऋत्विङ्नामकं, 'होतारम्' होतृनियामकतया विशिष्य तत्र सान्निध्यात् तदधीनत्वन्यायेनैव होतृनामकं ऋत्विजं होतारम् । कुरुपाण्डवन्यायेन सामान्यविशेषभावादपुनरुक्तिः । 'रत्नधातमम्' रमेः औणादिक-क्त-प्रत्यये 'लशक्वतद्धिते' इति ककारलोपे 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति धातोर्मकारलोपे 'रत्न' इति रूपत्वात् रत्नं सुखं धत्ते इति रत्नधाः अतिशयेन रत्नधाः तं रत्नधातमम् । 'देवम्' स्तुत्यर्थाद्दीव्यतेर्निष्पन्नत्वात् स्तुत्यम् । अत्र उक्तगुणानां निरवधिकत्वं विष्णौ, तदधिष्ठाने अग्नौ तु यथायोग्यम् । एवमग्रेऽपि ॥

अध्यात्मपरत्वे त्वयमर्थः । 'पुरोहितम्' सर्वानुकूलम् । यज्ञस्य ज्ञानयज्ञस्य 'ऋत्विजम्' ऋत्विग्भूतेन्द्रियाभिमानि-नियामकतया तत्र स्थितत्वेन ऋत्विङ्नामकम् । 'होतारम्' इन्द्रियाख्याग्निषु विषयलक्षणहविषां दातारं, विषयभोगप्रदम् । 'अग्निं' अङ्गं शरीरं नयति प्रेरयति– सर्वशरीरप्रवर्तकम् । 'ईळे' इति सम्बन्धः । अत्र अध्यात्मं सर्वत्र मोक्षसाधको यः कश्चिद्यजमानो ज्ञेयः । शिष्टं प्राग्वद्व्याख्येयम् ॥

श्रीमन्मध्वाचार्य-ऋगर्थविवरणानुसारेणेदं पर्यवसन्नम् । अध्यात्मं अधिदैवतं च मन्त्राणां तात्पर्यं योजनीयम् । अध्यात्ममन्तरर्थः । आधिदैवतपरत्वे यज्ञपरत्वमन्तर्गतम् । अतश्च कर्मस्ववान्तर-विनियोगो मन्त्राणामुपपद्यते मुख्यवृत्त्या । आधिदैवतपरत्वे पुनः परममुख्यवृत्त्या परमदैवतभूतविष्णौ महातात्पर्यमवगन्तव्यम् । एवमपि यास्कोक्तानि त्रीणि यज्ञ-देवता-आत्मपरिज्ञानानि वेदाल्लभ्यानीति द्वैताचार्यप्रतिपादितेन मन्त्राणां अर्थत्रयेण सामान्यतः सङ्गच्छते । सर्वथा मन्त्राणां कर्मसु विनियोगः अवान्तरप्रयोजनमात्रम् । तदनुरोधेनैव वेदर्चो व्याख्येयाः । अध्यात्मपरव्याख्याने याज्ञदैवतकर्मपरव्याख्यानेऽपि महातात्पर्यं विष्णावेव पर्यवस्यतीति श्रुति-स्मृति-पुराण-इतिहासेभ्यः सप्रमाणं सयुक्तिकं उपपादयामास पदवाक्यप्रमाणज्ञ आर्षचक्षुस्सम्पन्न आनन्दतीर्थ आचार्यः । इदमस्माभिरवधेयम् । ऋचां अध्यात्मपरदेवता-परत्वस्य प्राधान्यं केवलकर्मपरत्वस्य जघन्यत्वं च चिरन्तनार्षसम्प्रदायसिद्धं वेदरहस्यनिर्देशकं ऐतिह्यं मध्वऋग्भाष्ये मन्त्रार्थमञ्जर्यां च सोपपत्तिकं दृढीकृतम् । इतश्चास्ति रहस्यं वेदे, यद्वेदगुप्तार्थ-पक्षाश्रयणेन भेत्तुं शक्यमित्यलं विस्तरेण ॥

**अथास्य रहस्यार्थपक्षस्य स्वीकारे नव्यपाण्डित्य-सम्पन्नानां इदानींतनानां पाश्चात्यपद्यां प्रविश्य वेदविचाराय प्रवृत्तानां परिश्रमः सर्वोऽपि विफल एवेति वक्तव्यमिति**

चेमेति ब्रूमः । स्थूलं बाह्यार्थमाश्रित्य प्रवर्तमानस्य तेषां विचारस्य फलितं यदि समीचीनं न्याय्यं च भवेत्, तदा वेदमन्त्रदर्शिनां देश-काल-स्थिति-स्वरूपादिनिर्णयाय प्रभवेदिति न तत्परिश्रमोऽन्तरर्थमाश्रित्य प्रवृत्तस्यास्मदीय-गुप्तार्थसिद्धान्तस्य प्रतिकूल इति मन्यामहे । यतो मन्त्राणां बाह्यार्थ-स्थूलतात्पर्यसत्तामभिज्ञायैव प्रवर्तते सङ्केत-गुप्तार्थपक्षः । बाह्यार्थ एक एव मन्त्राणामिति वादे तु प्रत्यवतिष्ठामहे । इदं च सविस्तरं प्रागेव प्रपञ्चितमिति न पुनरिहोच्यते । तस्मात् प्रायः तटस्था वयं बाह्यार्थं आश्रित्य प्रवृत्तस्य परिश्रमस्य । प्राचीनवेदर्षि-देशकालदशा-विशेषनिर्णयाय वा ऐतिहासिकवृत्तान्तद्योतनाय वा बाह्यपक्षं ऋजुव्याख्यानमुपयुक्तं भवेदित्यसंशयम् । तथा च, तिलकमहाशयनिर्दिष्टः ऋषीणां उत्तरध्रुवमण्डलवासः तत्कालो वा निर्णेतुं शक्यः स्यात्, परमशिवमहोदयोत्प्रेक्षितः अहि-वृत्र-स्वरूपनिर्णयो वा ॥

अथ वैदिकदेवतास्वरूप-निर्णयायत्तं वैदिकसमयधर्ममधिकृत्य पाश्चात्यविद्वत्सु विप्रतिपत्तयो लक्ष्यन्ते । वेदर्षयो बहून् देवानाराधयामासुस्तस्मान्नानादेवतोपास्तिपरा वेदर्षय इत्येके । एकैकस्यामपि देवतायामुपासनसमये पारम्यबुद्धिरासीदुपासकानां ऋषीणामिति तात्कालिकोपास्यदेवताविशेषपारम्यवादिन ऋषय इत्यपरे । केवलं नाम-भेद एव देवताभेदः, एक एव परो देव इति वेदर्षय एकेश्वरवादिन इत्यन्ये । विश्वस्मिन् पाञ्चभौतिके जगति तत्र तत्र पदार्थेषु अभिमानि-देवताबुद्धिरासीदृषीणाम्, अत एव द्यावा-पृथिव्यौ अग्निर्वायुरादित्यः पर्जन्यो मरुत इत्येवमादयः सृष्टय एव देवताधिया स्तूयन्ते, तस्मात् प्रकृतिपूजकाः प्रकृतिसार्वात्म्य-देवतावादिनो वेदर्षय इति केचन । एवमद्यतनमेधाविनो वेदविमर्शका बहुधा विप्रतिपन्नाः संलक्ष्यन्ते । अत्रेदं ब्रूमः । एषां विविधानां वादानां प्रत्येकमाधारो न विद्यत इति नोपपद्यते वदितुम् । मूलपुरुषा वेदर्षयो नैवंविधानां मतानां अभिज्ञा इति स्मर्तव्यम् । यथा च औपनिषदर्षयोऽवर-कालिक-द्वैताद्वैतविशिष्टाद्वैतादिसिद्धान्तवादेभ्यो दविष्ठाः स्वीयानि दर्शनानि साक्षात्-कृतानि तत्त्वानि यथादृष्टं यथाश्रुतं वा प्रत्यपादयन्, तथा मन्त्रद्रष्टार ऋषयो विशेषतोऽस्मत्कालिकैकेश्वरवादादिभ्यो दविष्ठतमा यथादृष्टं यथाश्रुतं मन्त्रानाविष्कृत्य यथावसरं देवताराधनतत्पराः परदैवतमाराधयामासुरित्यसंशयम् । तस्माज्जगज्जीवेश्वरानधिकृत्य वेदर्षीणां मतं मतानि वा यदि परीक्षितुं प्रवर्तेमहि, तदा नैवोपसंहारः स्याद्वादानाम् । यथा वा औपनिषदसिद्धान्तमधिकृत्यावरकालिकानामाचार्याणां तदनुसारिणां च द्वैता-

द्वैतादिवादविशेषाः अद्यापि अधितिष्ठन्ति पण्डितलोक-विवादपाण्डित्य-भद्रपीठं, तथैव स्याद्वेदानधिकृत्य ईदृशो वादः । अत्रेदं कारणं भवति । न्यायवैशेषिकादि-दार्शनिक-चिन्तकानां तत्त्वनिर्णयो लक्षणप्रमाणपरीक्षायत्त इति निर्विवादम् । पूर्वेषामृषीणां तत्रापि वेदर्षीणामाद्यानां विलक्षणस्तत्त्वावगतिपन्थाः । तस्मात् तपोनिष्ठानां तेषां ईदृक्षया परीक्षया नाभवत् कार्यम् । यतस्तेषां साक्षात्साधनं दर्शनं श्रवणं च गुरु-परम्पराप्राप्तदीक्षाबलात्सिद्धमभवत् । मन्त्रवर्णानां ऋजुतात्पर्यग्रहणे वक्ष्यमाणाः सर्वेऽपि अर्था अवभासेरन्नित्यसंशयम् ॥

एक एव परो देवः बहुदेवात्मकतया बहूनि नामानि बिभ्रदवतिष्ठत इति मन्त्र-वर्णेभ्यः सिद्धं भवति । बह्वीनां देवतानां पृथगात्मतयाऽवस्थानादेव तत्तद्देवतालिङ्गद्वारा अमुकदैवत्यं अमुकसूक्तं इति निर्णीयत इति हेतोः देवता-नानात्वं मन्त्रवर्णैरेवावगम्यत इत्यसंशयम् । ऋषिदृष्टौ एकैकोऽपि देवः परम एव नान्यः परस्माद्देवादित्यपि बहुभिः सूक्तैरुपपादयितुं शक्यम् । अध्यण्डमधिपिण्डं वा विश्वव्यापारेऽधिकृतानां नानादेवानां इतरेतरप्रकृतित्वं इतरेतरजन्मत्वं वा मन्त्रदर्शिभिर्दृष्टं, दर्शितं चेति सूक्तपाठेभ्योऽवबुध्यते । एक एव महानात्मा सूर्यपदवाच्यः, यस्यैव मूर्तिभेदाः व्यक्तिविशेषा अङ्गप्रत्यङ्गभूताः तत्तद्गुणक्रियोचितानि नामानि बिभ्रतो देवाः प्रतिपादिता वेदेष्विति आदिवेदसंहि-तायां तत्र तत्र स्पष्टमवगम्यते । तस्मादस्माकं परमं प्रयोजनं वेदाल्लब्धव्यं चेत्, तत्तन्मन्त्रदृष्टयो यथासन्दर्भमार्षसम्प्रदायमवलम्ब्य शब्दतोऽर्थतश्च परमप्रमाणबुद्ध्या परिग्राह्याः । यद्यपि पूर्वोक्तानां बहूनां मन्त्रप्रतिपादितानां मतानां नास्तीतरेतरविरोधः, तथाऽपि तेषां सामरस्यप्रतिपादनाय नैवावश्यकी परीक्षेति ब्रूमः । का वा क्षतिर्यदि विरोधपरिहारः सामरस्यप्रतिपादनं वा न प्रवर्तेत? अयं ब्रह्मकोशः, भक्त्या ज्ञानेन तपसा उपगम्याराधनीयः । नायं सूत्रग्रन्थ-तद्भाष्यजातीयको ग्रन्थ इव पूर्वपक्षसिद्धान्त-युक्ति-प्रतियुक्तिवाद-युद्धक्षेत्रं भवति । अत्यन्तपुरातनार्षदर्शनशेवधिरयं बह्वृचानां मन्त्र-पाठः । अध्यात्मविद्यादेवतातत्त्वादि-बहुरहस्य-रत्नानामनर्घो निक्षेपः । असाधारण-साधनसम्पादितानां अतीन्द्रियाणां अर्थानां चर्मचक्षुरगोचराणां विपुलानां लोकानां तद्गतानां आधिकारिकपुरुषाणां तच्छक्तीनां स्वतः शक्तिभूतानां व्यक्तीनां च रहस्यानि अधिगम्य रहस्याध्वनि योगनिष्ठामास्थाय अधिगतवतां नः पूर्वेषां वसिष्ठवामदेवादीनां दिव्यदर्शनश्रवणात्मकस्य अनितरसामान्यस्य साक्षात्कारस्य वाङ्मयावतारोऽयं वेदग्रन्थः,

कानि वा अन्यान्यन्तर्निहितानि अस्यामत्यन्तचिरन्तन्यां दाशतय्यां संहितायां, को वेद ? 'तस्मात्तपसा पारमीप्सितव्यम्, तस्मात्तपसा पारमीप्सितव्यम्' ॥

## अथ चतुर्थः खण्डः

अथ देवतामीमांसायां वक्तव्यमिदमवशिष्यते—

तथाविधाः सन्ति मन्त्रा बहुत्र दाशतय्यां संहितायां, येषां गूढार्थविवरणमन्तरेण तात्पर्यं न सङ्गच्छते बाह्यपक्षावलम्बनेऽसामञ्जस्यमेवापद्यते । अन्यच्चेदं अवधेयम् । यद्यपि नव्याः पाश्चात्यविचारमार्गानुसारिणः सायणीय-बाह्यार्थपद्धतिमेवाश्रयन्ते, तथाऽपि देवता अधिकृत्य ते भारतीय-प्राचीनसम्प्रदायानुसारिणं सायणं न सर्वथाऽनुयान्ति । देवताविषये स एष विशेषः । अस्मदीयाः पूर्वे देवानां तत्तल्लोकाध्यक्षत्वं तत्तत्तत्त्वाभिमानित्वं वाऽभिप्रयन्ति स्म । सूर्ये स्तूयमाने तन्मण्डलाध्यक्षस्तन्मडलान्तर्वर्ती वा पुरुषः स्तुतो भवति । एवं अग्न्यादीनां स्तुतावपि अग्न्याद्यभिमानि-देवतास्तुतिः कृता भवति । नव्यास्त्वत्र प्रत्यवतिष्ठन्ते । अग्निवाय्विन्द्रसूर्यादीनां दृश्यब्रह्माण्डगत-पदार्थ-रूपत्वमात्रं अङ्गीकृत्य तत्र अधिष्ठानाभिमानाध्यक्षतादीन् उद्धृत्य निराकार्षुः । अत्रेदं कारणं भवति । प्राकृतावस्थानां वेदकवीनां केवलकल्पना सा, यया जडवस्तुषु देवतात्वारोपणं साधितमिति तेषां मतम् । गूढार्थसिद्धान्तिनो वयं तु बाह्यपदार्थानां सङ्केतरूपत्वं पश्यन्तोऽपि पृथिव्यादीनां अग्न्याद्यधिष्ठानत्वं अभ्युपगच्छामः । अन्त-र्बहिश्च देवानामधिकारं पश्यतो गूढार्थसिद्धान्तस्य अर्थाविष्कारनये सर्वत्र अन्तरर्थस्य प्राधान्यं बोध्यम् ॥

अथ मन्त्रवर्णानामुदाहरणेनेदं प्रतिपादयामः— यच्चेतना एव देवा अन्तर्दृष्टिगोचरा इति । बाह्यार्थपक्षावलम्बनेन तथोपपत्तिर्दुर्घटा । प्रधानदेवतानां इन्द्रादीनां अप्रधान-त्वेन परिगणितानामपि मरुदादीनां च प्रस्तावेषु स्थूलार्थपक्षे पर्यवसन्नोऽर्थो न सङ्गत इति प्रदर्शयिष्यामः— 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुरा-ततम् ॥' (१. २२. २०.) । अस्मिन्मन्त्रे प्रतिपादितो देवो विष्णुः सूर्य इति व्याचक्षते । बाढम् । सूर्य एवायं विष्णुः, किं तु नासौ लौकिको भवितुमर्हति । कुतः ? यत् प्रत्यहं सञ्चारे नभोमध्यं तेनाधिगतं भवति तदेव परमं पदं भवतीति वक्तव्यम् । तच्च सूरयः सर्वदा पश्यन्तीति आह । कथं खमध्यं सर्वदा सूर्यमण्डलाधिष्ठितं भवेत्, यच्च

सूरीणामेव गोचरं स्यात्? लौकिकं चेत् सूर्याक्रान्तं पदं तद् असूरिजनस्यापि गोचरं स्यात्, कुतः सूरिजनगोचरमिति वक्तव्यम्? अलौकिकोऽतीन्द्रियार्थः सूरिजनसाक्षादर्शनविषय इति असंशयम्। न चेत् काल्पनिकमिदं असम्बद्धप्रलपितं भवेत् यत् सूरयः सदा खमध्यं सूर्याक्रान्तं पश्यन्तीति। अलौकिकत्वादेव तद् धाम श्रेष्ठं दिवि समन्तात् ततं चक्षुरिव सदा पश्यन्ति सूरय इत्युक्तम् ॥

एवंजातीयकमन्यं मन्त्रं निरीक्षामहे— 'उद् वयं तमसस् परि ज्योतिष्पश्यन्त उत्तरम्। देवं देवत्रा सूर्यं अगन्म ज्योतिरुत्तमम् ॥' (१. ५०. १०.)। अस्यायमर्थः— 'वयं तमसः अन्धकारात् पाप्मनः परि उपरि उत् उद्गम्य उत्तरं उद्गततरं उत्कृष्टतरं वा ज्योतिः पश्यन्तः सन्तः देवत्र देवेषु देवानां मध्ये देवं द्योतमानं सूर्यं उत्तमं ज्योतिः अगन्म प्राप्नुयाम।' अयं सामान्यार्थो मन्त्रस्य। तमश्शब्देन पाप्मा कथित इति ब्राह्मणवाक्योदाहरणेन सायणो व्याचष्टे। तर्हि नायं लौकिकः सूर्यः। सायुज्यमेव उक्तमृषिणा प्रस्कण्वेनेति तुरीयपादव्याख्याने सायण एवाह। अस्यामृचि स्पष्टमुक्तं अतीन्द्रियार्थ-सूर्यपदवाच्यं उत्तमं ज्योतिः। यथा कथञ्चिद् व्याख्यातेनाप्यनेन मन्त्रेण बाह्यो लौकिकः सूर्यो न निर्दिष्ट इति स्पष्टम् ॥

बाह्याः सूर्यादयो भावा एव देवता इति वादो नोपपद्यत इति प्रदर्शयितुं सूर्यात्मकविष्णुदेवताकमेकं ज्योतिःस्वरूप-सूर्यदेवताकमन्यं च मन्त्रं उदाहार्ष्म। अथेन्द्रदेवताका ऋचः कतिचन परीक्षामहे। इन्द्रः किल त्रिलोकाधिकारिकाणां देवानां राजा मेघमण्डलादूर्ध्वं तिष्ठन् वृत्रपदवाच्यं मेघं वज्रेण हत्वा विसृजत्यप इति वदन्ति। यद्यपि एवंविधान् अभिप्रायान् समर्थयितुं तत्र तत्र प्रकरणात्पृथकृता मन्त्रा अवकाशं दद्युः, तथाऽपि बहुत्र नोपपद्यन्ते। अन्तरर्थानुसारेण तु सर्वत्र सामञ्जस्यं परिस्फुटं भवति— 'दूरे तन्नाम गुह्यं पराचैर्यत् त्वा भीते अह्वयेतां वयोधै' (१०. ५५. १.)। अत्र ऋषिरिन्द्रं सम्बोध्य प्राह— 'तद्रहस्यं ते नाम दूरे वर्तते, येनैव साधनेन द्यौश्च पृथिवी च त्वां आह्वयत' इति। 'महत् तन्नाम गुह्यं पुरुस्पृग् येन भूतं जनयो येन भव्यम्।' (१०. ५५. २.) 'तद् रहस्यं नाम महद्भवति, यस्मै स्पृहयन्ति लोकाः, येनैव साधनेन सर्वं जातं त्वं अजनयः, जनितव्यं च जनयसि त्वं इन्द्रः' इति स्पष्टार्थो मन्त्रः। आत्रेयमण्डलस्थं एकं मन्त्रं पश्यामः— 'अवाचचक्षं पदमस्य सस्वः उग्रं निधातुरन्वायमिच्छन्। अपृच्छमन्यान् उत ते म आहुः इन्द्रं नरो बुबुधाना अशेम ॥' (५. ३०. २.)।

ऋषेर्बभ्रोरियं मन्त्रदृष्टिः । अयं भावः— 'तस्येन्द्रस्य दृढं रहस्यं धाम अहं अद्राक्षम् । नितरां धातारं प्रतिष्ठापकं तं कामयमानोऽहं तत्पदं अधिगतवानस्मि । कथम्? प्रथमं अहं अन्यान् बुधान् अपृच्छम् । तैरेवं उक्तोऽस्मि, नेतारो वयं प्रबोधवन्तः सन्तः तं इन्द्रं प्राप्नुयाम' इति । पुनश्च तदेव रहस्यं, पूर्वोदाहृतमन्त्रयोः रहस्यं नाम, अत्र तु धाम । किं तत् पदं नाम वा अभ्रमण्डलात् किञ्चिदधिकं वोर्ध्वं वा वर्तते? मन्त्रवर्णः स्पष्टमाह प्रबोधे सति इन्द्रकामस्य इन्द्राधिगमो भवतीति । इन्द्रमत्र 'निधातारं' नितरां धारकमाह । किमयं काल्पनिको देवः क्वाप्याकाशे वर्तते? किमत्र 'बुबुधानाः' इति प्रयोगेण ऋषीणां साधरणस्वापोत्थानमेव निर्दिष्टम्?

अथ मरुतोऽधिकृत्य, ते चण्डवाता एव भवन्तु । यद्यपि मरुत्वत इन्द्रस्य भ्रातर इमे नेन्द्र इव प्रधानदेवता भवन्ति, यद्यपि विशेषतो बाह्यव्यापारा एव लक्ष्यन्ते, अत एव बाह्यार्थपक्षप्रोद्बलकास्तन्मन्त्रा इत्यसंशयं स्थूलदृष्ट्या, तथाऽपि तेषां अन्तर्व्यापारवत्त्वं, पाप्मनो रक्षणं, अन्यथा गूढस्वरूपत्वं इत्यादीनि मन्त्रेभ्योऽवगम्यन्ते । अघेभ्यो रक्षार्थं अगस्त्यो मरुतः प्रार्थयते 'अघाद्रक्षत' इति । यदि मरुतो बहिर्व्यापारा ऋषेः स्तवेन प्रसाद्यन्ते, ऋषेरावासस्थानानि अन्यानि द्रव्याणि च प्रचण्डमारुताघातेभ्यो रक्षितानि भवन्तु । कथं तेषां चेतनव्यापारा पापनाशिनी शक्तिरन्तर्वृत्तिः सम्भवेद्, यदि ते जडाः केवलं बाह्यभावाः स्युः? वसिष्ठस्येह मन्त्रदृष्टिमवधत्त— 'इहेह वः स्वतवसः कवयः सूर्यत्वचः । यज्ञं मरुत आवृणे ॥' (७. ५९. ११.) । ऋषिराह— भोः मरुतो देवा यूयं 'स्वतवसः' स्वबलेन वृद्धाः 'कवयः' क्रान्तदर्शिनः 'सूर्यत्वचः' सूर्यप्रभैव युष्माकं आवरकं रक्षकं चर्म, तादृशेभ्यो युष्मभ्यं अहमिहैवाधुना यजनं कल्पयामि' इति । कथं इमे क्रान्तदर्शिनः अत एव चेतनावन्तः केवलं बाह्यभावाश्चण्डमारुता जडा भवितुं अर्हन्ति? 'एतानि धीरो निण्या चिकेत' (७. ५६. ४.) इति द्वितीयखण्डे प्रागुदाहृतेन मन्त्रेणापि सूक्ष्मदर्शिनो धीरस्य ऋषेरेव मरुतां रहस्यानि विदितानि भवन्तीति सिद्धम् ॥

अथ सोमः । अयं च लताविशेषः बाह्यो भाव इत्यसंशयम् । अत्रापि याज्ञिकः सङ्केतरूप एवायं अन्तरर्थगम्यस्य चिदानन्द-क्षरणस्वभावस्य देवस्येति क्वचिद्विशदं भवति मन्त्रेषु । बाह्यपक्षे तु बहुत्र मन्त्रा असङ्गतार्था एव भवन्ति । आयुर्वेदे कल्पौषधित्वेन ख्यातः सोमः । सोमपानमदोन्मत्ताः कवयो यथेच्छं सोमवैभवं गायन्तीति निरङ्कुशं कल्पयन्ति नव्याः कल्पनाचतुराः । सोमस्य चतुर्विंशतिभेदाः कथिताः सुश्रुतसंहितायां

चिकित्सास्थाने (२९. अ.) । तत्र न क्वापि तस्य मदप्रभावो वर्णितः । विचित्रमिदं यदृषयः पानमदलिप्सया बहुशतसङ्ख्याकैर्मन्त्रैः सोमं तुष्टुवुरिति, वस्तुतस्तु लतायाः केवलसङ्केतरूपतामात्रम् । अन्तरर्थेनैव सर्वत्र सोममन्त्राणां सामञ्जस्यं लक्ष्यते– 'विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोस्ते सतः परि यन्ति केतवः । व्यानशिः पवसे सोमधर्मभिः पतिर्विश्वस्य भुवनस्य राजसि ॥' (९. ८६. ५.) कथमयं मन्त्रो सोमलतापरत्वेन व्याख्यातुं शक्यः? स्वयं विचार्यतां मतिमद्भिः, अयमस्यार्थः– विश्वचक्षः सर्वार्थदर्शिन्! सोम, प्रभोः परिबृढस्य सतः ते तव ऋभ्वसः महान्तो द्रष्टारः केतवः प्रज्ञापकाः रश्मयः विश्वा सर्वाणि धामानि तेजःस्थानानि देवशरीराणि परियन्ति परितो गच्छन्ति प्रकाशयन्तीत्यर्थः । हे सोम, व्यानशिः व्यापनशीलस्त्वं धर्मभिर्धारकैः रसपदवाच्य-आनन्दनिष्यन्दैः पवसे क्षरसि । विश्वस्य भुवनस्य पतिः स्वामी त्वं राजसि ईश्वरो भवसि । इत्ययमर्थः सायणभाष्यानुसारेणैव प्राप्तो भवति । एतावतोक्तेनापि यदि सोमविषये सन्देहो न व्यपेतो भवेत्, अन्यो मन्त्रः संशयच्छेदको दशममण्डलस्थो जागर्ति– 'सोमं मन्यते पपिवान् यत् सम्पिपन्त्योषधिम् । सोमं यं ब्रह्माणो विदुः न तस्याश्नाति कश्चन ॥' (१०. ८५. ३.) । अस्मिन् मन्त्रे वस्तुतः सोमस्वरूपस्य निर्णयः कृतः । सामान्यतः सर्वोऽपि सोमलतापेषणेन रसमादाय पानं कुरुते, यं वस्तुतत्त्वज्ञाः तात्त्विकं सोमं विदुः तस्य भोक्ता दुर्लभ इति ह्यस्या ऋचोऽभिप्रायः ॥

अथोषसमधिकृत्य । उषः प्रभातकालो बाह्यपक्षे साध्वेव कथ्यते । किं तु तस्याः तत्त्वं अन्तरर्थगम्यं, नात्र सन्देहः । उत्तमं ज्योतिरिति वेदप्रतिपादितस्य सत्यस्य सूर्यस्य साक्षात्कारात्मकाद् उदयात्प्राक् तस्य पुरस्सरा देवी सौरी प्रभा आविर्भवति । अत एव तां 'ऋतावरी' 'सूनृता' इति वर्णयन्ति मन्त्राः । 'ऋतस्य रश्मिं अनुयच्छमाना भद्रं भद्रं क्रतुमस्मासु धेहि' (१. १२३. १३.) । इत्यत्र सत्यस्याध्वानमनुगच्छन्तीं उषसं ऋषिः कल्याणतमं दृढप्रज्ञाबलं याचते । कथं प्रभातकालस्येदृशं सामर्थ्यं सम्भवति? एवं अन्येऽपि देवाः मित्रो वरुणोऽश्विनावित्यादयः स्थूलपक्षानुसारेण अनिर्णीत-बाह्यभावा अपि अन्तरर्थानुसारेण विस्पष्ट-देवभावा इति तत्तन्मन्त्रतात्पर्यावगाहने सुगमं भवति ॥

अथेदं निरीक्षणीयम् । एकस्यैव परस्य देवस्य सर्वे देवा बहूनि नामानि अङ्गानि व्यक्तयश्चेति प्रागुक्तम् । किमयमाशयः मन्त्रवर्णेभ्य एव सिध्यति, उत, औपनिषद-तत्त्वविदां अर्वाक्कालिकानां व्याख्यानबलादिति संशयः । अत्र नव्या 'ऋग्वेदे प्रायशो

नाना-देवतावाद एव सर्वत्र, उपनिषत्स्वेव सत्यं एकमेवाद्वितीयं ब्रह्म प्रतिपादितम् । यद्यपि क्वचिद् एकदेवस्वरूपज्ञानं ऋषीणां लक्ष्यते, तथाऽपि तदर्वाचीनमन्त्रेषु विशेषतः दशमे मण्डले' इत्याहुः । अत्र ब्रूमः । नेदं तथ्यम् । बहुभ्यो मण्डलेभ्यो मन्त्रान् उदाहरामः, यत्र अग्निरिन्द्रोऽन्यो वा देवः साक्षात्तदेक-स्वरूपभावेन स्तूयते ऋग्वेदे । तदेकं, एकं सत्, उत्तमं ज्योतिरिति च सूर्यपदवाच्यं परमं सत्यं श्रूयते, यस्यैव व्यापार-भेदात् व्यक्तिनामभिर्भिन्ना देवा इति च ज्ञायते । अत्र प्रथमं तावद् बहुधोदाहृतः प्रसिद्धो दैर्घतमसो मन्त्रवर्णो भवति । 'इन्द्रं मित्रं' इत्यारभ्य 'एकं सद्विप्रा बहुधा वदन्ति' (१. १६४. ४६.) इति तृतीये पादे सारं प्रदर्शयति मन्त्रदृष्टिः ॥

वैश्वामित्रे मण्डले द्राविंशत्यृच एकस्मिन् सूक्ते– 'महद् देवानां असुरत्वं एकम्' (३. ५५.) इति सर्वास्वपि ऋक्षु आवृत्त्या पठितम् । असुरत्वं प्रबलं महदैश्वर्यं एकं इत्युक्तम् । अन्यत्र (३. ५४. ८.) 'विश्वेदेते' इति मन्त्रे 'विश्वं एकं चरत् पतत्रि विषुणं वि जातम्' इति तुरीयः पादः । अस्या ऋचोऽयमर्थः– द्यावा-पृथिव्यौ सर्वाणि जातानि विविक्तानि कृत्वा धारयेते, सर्वान् देवान् बिभ्राणे अपि भारश्रमाद्व्यथां न प्राप्नुतः । यत् चराचरात्मकं विश्वमीष्टे तदेव चरं भवति पतत्रि भवति नानारूपतया जातं च भवति इति । अथ वामदेव्ये मण्डले 'वपुषामिदेकम्' (४. ७. ९.) इति प्रयुक्तम् । पुनश्च 'वपुषामपश्यम्' इति पञ्चमे मण्डलेऽपि मन्त्रो दृश्यते (५. ६२. १.) । स च प्रागुदाहृतो व्याख्यातश्च तृतीयखण्डे । 'ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः । विश्वे देवाः समनसः सकेताः एकं क्रतुं अभि वि यन्ति साधु'' (६. ९. ५.) । अयं आग्नेयो मन्त्रः, अत्रापि ध्रुवं अमृतं ज्योतिः अन्तर्निहितं दर्शनाय, तमेकं क्रतुं प्रति सर्वे देवाः स्वैः पथिभिः साधु यान्तीति कथितम् । वासिष्ठे मण्डले (७. ३३. १०.) 'विद्युतो ज्योतिः' इति मन्त्रे 'तत्ते जन्मोतैकं अगस्त्यो यत्त्वा आजभार' इति गीतम् । दशमे मण्डले (१०. ८२. २.) 'यत्र सप्त ऋषीन् पर एकमाहुः' इति स्पष्टमुक्तम् । तत्रैव सूक्ते (ऋक् ६.) 'अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः' इति मन्त्रवर्णः । जन्मरहितस्य तस्यैकस्य नाभौ सर्वे लोकाः प्रतिष्ठिता इत्युक्तं, 'सुपर्णं विप्राः कवयो वचोभिः एकं सन्तं बहुधा कल्पयन्ति' (१०. ११४. ५.) एवं तदेकं परं सत्यमेव देवो देवानां ऋक्संहितायां गूढमगूढं वा स्तूयत इति प्रदर्शयितुं बहुभ्यो मण्डलेभ्यो मन्त्रा उदाहृताः, न केवलं दशममण्डलात् । इदं च तत्त्वं मनसि निधाय

यदि न केवलं आग्नेयसूक्तानि इन्द्र-सोमादिसूक्तानि च पश्येमार्थविचाराय, तदा असन्दिग्धं भवेदिदं यत्तदेकं सदेव सर्वेऽपि देवाः येषामेकैकोऽपि स्वसदृशं साहाय्यं विनियुज्य यजमानं नरं तदेकं परं ज्योतिरमृतं सत्यं प्रापयतीति ॥

अत्र काश्चन ऋच उदाहरिष्यामः, याभिस्तदेकमेव परं ज्योतिः बहुदेवताकारभृद् वर्ण्यते– 'येषामर्णो न सप्रथो नाम त्वेषं शश्वतामेकमिद्भुजे । वयो न पित्र्यं सहः ॥' (८. २०. १३.) । ऋषिः सोभरिः काण्वः मरुतो देवान् अधिकृत्याह । अयं भावः । तेषां मरुतां एकं नाम भ्राजमानं समुद्रवत् पृथुलं बहूनां भोगाय पित्र्यं बलमिव भवतीति । अनेन मरुतामेकाधारत्वं बहूनां देवानां यजमानानां वस्तुजातस्य वा उपकारकत्वं च द्योतिते । वालखिल्यसूक्ते (८. ५८. २.) 'एकं वा इदं वि बभूव सर्वम्' इति स्पष्टम् । 'अयमस्मि जरितः पश्य····ऋतस्य एकमासीनं हर्यतस्य पृष्ठे' (८. १००. ३. ४. ५.) अत्र ऋषिं नेमं इन्द्रास्तित्वे जातशङ्कं इन्द्र आह– 'अहमस्मि स्तोतः, पश्य, मम महिम्ना विश्वानि जातानि अतिक्रम्य स्थितोऽस्मि, ऋतस्योपगन्तारो मां वर्धयन्ति, ऋतं कामयमानाः समारुह्य मामुपयन्ति, अहं तु एक आसीनोऽस्मि नाकपृष्ठे' इति । 'ते हिन्विरे अरुणं जेन्यं वस्वेकं पुत्रं तिसृणाम् । ते धामान्यमृता मर्त्यानां अदब्धा अभिचक्षते ॥' (८. १०१. ६ ) । अत्र देवानां व्यापारमहिम्ना यजमाने जातं महद्धनं एकमेव ज्योतिः तिसृणां मातृणां पुत्रत्वेन कीर्तितम् । 'स सप्तधीतिभिर्हितः नद्यो अजिन्वदद्रुहः । या एकमक्षि वावृधुः ॥' (९. ९. ४.) । भूरादिसप्तलोकधामगताभिः धीशक्तिभिर्धारितः स (सोमः) तेजोवाहिनीरप्रीणयत् । ताश्च नद्यः 'एकं अक्षि' विश्वैक चक्षुःशब्दवाच्यं सर्वार्थदर्शि ज्योतिः अवर्धयन् इति भावः । 'महन्महत्या असुरत्वमेकम्' (१०. ५५. ४.) इदं च 'महद्देवानां असुरत्वमेकम्' इति प्रागुदाहृतवाक्यप्रायम् ॥

एवं देवानां एकमूलत्वं एकात्मत्वं एकलक्ष्यत्वं च मन्त्रवर्णैरेव ग्राह्याणि भवन्ति । तेषां पृथक्त्वं तु नामतो व्यापारतो व्यक्तितश्चेत्यवधेयम् । अत एव तेषां लिङ्गानि मन्त्रेभ्य एवावगम्य पूर्वैरुक्तानि । आयुध-वाहन-वर्णादयोऽपि लक्षयन्ति देवताविशेषान् । 'बभ्रुरेक' इति प्रागाथमण्डलीयसूक्तात् (८. २९.) तत्त्वमिदमवगम्यते । वाहनान्यधिकृत्य निरुक्त-निघण्टौ (१. १५.) 'हरी इन्द्रस्य' इत्यारभ्य 'नियुतो वायोः' इत्यन्तं पठ्यते । एवमपि देवतालिङ्गानि मन्त्रवर्णेष्वेव लक्ष्यन्ते ॥

अथेदं वक्तव्यम् । यद्यपि सर्वेषां देवानां कर्माणि ऊर्ध्वमूलानि परस्माद्धाम्नः

प्रारभन्त इत्यसंशयं, तथाऽपि तेषां प्राधान्यं साक्षात्साहाय्यं आरादुपकारकत्वं वा यजमानस्य अध्वरपदवाच्येन अन्तर्यागमार्गेण दिवमारोहतः यात्रादशायत्तमिति वक्तव्यम् । विश्वमेव ह्यन्तर्बहिर्वा देवतानां अधिकारक्षेत्रम् । तस्मात्तासां कर्तव्यानि ऊर्ध्वमूलाद् आपृथिव्याः प्रवृत्तानि प्रसरन्ति, तत्र तत्र सोपानपदविशेषेषु यावदपेक्षं विभिद्यन्ते । यद्यपि एकैकस्मिन् धामनि मध्येमार्गं तदधिष्ठानदेवतायाः प्राधान्येनाधिकारः, तथाऽपि सा एकमेव मुखं परमस्य देवदेवस्य । अन्याश्च देवतास्तस्याः पश्चात् परस्ताद्वा व्यापृतास्तत्साहाय्येऽवतिष्ठन्ते । इदमेव तत्त्वमाधारो भवति मन्त्रद्रष्टृणामृषीणां देवतास्तवेषु, यत्र बह्वीषु देवतासु स्तूयमानास्वपि एकैकामपि सर्वदेवात्मभावेन प्रकरणबलात् पृथक्त्वेन च उपतिष्ठते स्तोता यजमानः । ऋषेर्मन्त्रद्रष्टुरिमे देवाः सत्याः, न तु काल्पनिका इति किमु वक्तव्यम् ?

अथेदमवधातव्यम् । अन्तर्यजने चलति, यजमानस्य तत्तत्पदमधिष्ठातुरग्न्यादेर्देवस्य च सम्बन्धोऽभिनिष्पद्यते । स च पिता-पुत्र-सखित्वादिरूपो बहुविधो लक्ष्यते वेदे । अन्यच्च इदं चित्रं, यद् यो देवः पालकः पिता पूज्यो भवति, स एव यजमाने जायमानः पुत्रो भवतीति । अत एव सर्वेऽपि देवाः ब्रह्माण्डेऽधिकाराय प्राप्तप्रथमजन्मानः यजमाने द्वितीयं जन्म लभन्ते । तस्माद् द्विजन्मानो देवा इति सङ्गच्छते । कथं कुतो वा यजमाने देवानां द्वितीयं जन्म ? उच्यते । दिवः परस्तात् परस्माद् धाम्नः प्रस्थितस्य विश्वस्य मूर्धा द्यौः शिखरभूता भवति, तदारभ्य पृथिव्यां पादभूतायां विरमतीव विश्वसृष्टिः । एवं द्यावापृथिव्योरन्तराले पर्वतशिखर-पादयोरन्तर इव बहूनि पदानि गिरिप्रस्थवदवतिष्ठन्ते । तदधिष्ठानदेवैः परिपक्के यजमाने स्वीयवैभवाधानपूर्वकं तदुद्धाराय स्वीयं जन्म लभ्यते । एषां मुख्यः प्रथमजोऽग्निर्भवति । तस्मात्तस्यैव स्वरूपाधिकारविचारः क्रियते । तथा कृते अन्येषां देवानां तत्त्वमपि सुगमं स्यात् । तत्र यथापूर्वं मन्त्रवर्णाधारेणैव निर्वाहः भवति ॥

कोऽयमग्निदेवः यः प्रबोध्य ऋषिभिरीड्यते ? नायं नूनं भौतिको भवितुमर्हति, पञ्चसु भूतेषु तृतीयस्य तस्य जडत्वात्, तेजस्तत्त्वाभिमानित्वेऽपि बाह्यसङ्केतमात्रत्वाच्च । नापि स बहिर्यज्ञकर्मणि अरणिनिर्मथितो वा भवितुमर्हति, यं देवं विना अमृतानां देवानां सम्मदो न विद्यते । 'न ऋते त्वां अमृता मादयन्ते' इति हि मन्त्रदृष्टिः । देवोऽयमग्निः 'कविक्रतुः', क्रान्तदर्शिनः प्रज्ञा अस्येति बहुशो गीयते वेदेषु । अस्मिन् सर्वं यज्ञरहस्यज्ञानं निहितं, अस्मिन् सर्वेऽपि रमन्ते अमर्त्या इत्येवमर्थको मन्त्रराशिर्जेजीयते

दाशतय्यां संहितायाम् । स मुखं भवति देवानां, आस्यं च भवति । स हि सर्वं यजमानेनार्पितं हविः देवान् प्रापयति । स एव देवानामग्रे तिष्ठन् प्रमुखो यजमानमुपगच्छति हविरादानाय । हविरर्पणानि प्रणतीश्च स्वीकृत्य देवानास्वादयति, प्रीणयति । तस्मात्स दूतो देवानाम् । तद्द्वारेणैव मर्त्योऽमर्त्यैः सह व्यवहर्तुं प्रभवति । स नेता 'नर' उच्यते । होता च यज्ञस्य ऋत्विक् । स निर्वहन् यज्ञविधिं देवानाह्वयति यजमानकृतद्रव्यत्यागपरिग्रहाय । स एव तस्मात्सर्वेषामाद्यो देवानां मर्त्ये जनितुम् । इदं च प्रागुक्तं द्वितीयं तस्य जन्म । स 'क्रतुः' दैवी दृढप्रज्ञाशक्तिः मानुषे 'एवमेतत्, नान्यथा' इति अध्यवसायात्मिका बुद्धिर्भवति । तादृशः 'क्रतुः' यदा अरण्योर्निर्मथनाद्याज्ञिकाग्निरिव द्यावापृथिव्योर्विश्वस्य पित्रोरनुग्रहयोगात् मर्त्यस्य हृदयवेद्यां प्रादुर्भूतो भवति, तदा सुप्तोत्थित इव यजमानस्वात्मार्पणान्यादाय पदे पदे दिवमारोहति । सोऽयमग्निः हृदयस्थदैवज्वालो भवति, यस्य स्वं वासस्थानं बृहती द्यौः, यश्च मर्त्येष्वमर्त्यो जायते । जातश्च स सप्तभिः स्वसृभिः पोषितो भवति । सप्तमातृस्तनन्धयं तं आपः सप्तसिन्धवः समादृत्य पुष्णन्तीति वर्ण्यते । इदं च सप्तकं भूरादिसत्यलोकान्ताः सप्तभूमिकागताः सप्ततत्त्वात्मिकाः शक्तय इति ग्राह्यम् । सप्ततत्त्वात्मक-सप्तभूमिका-ज्ञानशक्तिवैभवानि अस्मिन्नग्नाववस्थितानीति बोध्यम् । अत एवानेन हविराद्यर्पणेषु उपात्तेषु सप्तापि धामानि तद्भागहराणि भवन्तीति द्योतयितुं सप्तार्चिस्सप्तजिह्वादिः अग्निपर्यायशब्दः प्रयुज्यते । तथा यजमानदानेषु सप्तभूमिकाः प्रापितेषु, तत्र यजमानस्य धामानि सिद्धानि भवन्ति, तदीयदेवानाममर्त्यानां जन्मापि मर्त्ये यजमाने सम्भवति ॥

बहुव्यपदेशभागग्निर्वेदे गीतो गुहापदवाच्ये रहसि हृदये निहितः किल । अग्निधर्मबोधकानि कानिचिन्नामानि ख्यापयतो मन्त्रवर्णान् साभिप्रायानुदाहृत्य कथं अग्निरेव स्कन्दः कुमार इति पुराणेषु प्रथितोऽभवदिति निरूपयिष्यामः । अनादेः कालादृषीणां अयं दृढः प्रत्ययः, यदग्निर्नाम सत्यो देवः, न काल्पनिकः नापि केवलं भौतिको याज्ञिको वा, किं तु देवोऽयममर्त्यो मर्त्येष्विति । भृगुपदवाच्याः सत्यसौरप्रभाशक्तय ऋषित्वं प्राप्ताः दिवोऽग्निमाहृत्य मानुषे निधिभूतं मित्रमिव न्यधुरित्याहुः । किमर्थम् ? मानुषस्य दिव्यजन्मलाभायेति गायन्ति । तथा च राहूगणः— 'दधुष्ट्वा भृगवो मानुषेषु...... मित्रं न शेवं दिव्याय जन्मने' (१. ५८. ४.) । ईदृश्य ऋचो बह्व्यो दृश्यन्ते, यासां तात्पर्यं न सङ्गच्छेत यदि वयं ऋषीणां किमपि रहस्यं अन्तर्विश्वं विदितमिति

नाभ्युपगच्छेम । 'इमं नो यज्ञममृतेषु धेहि इमा हव्या जातवेदो जुषस्व' (३. २१. १) । 'भोः अग्ने सर्वेषां जातानां वेत्तः! त्वमिमं अस्मदीयं यज्ञं अमृतेषु देवेषु धेहि, इमानि हव्यानि तत्रार्पयितुमर्हसि,' इति प्रार्थयते यजमान ऋषिः । 'अयं कविरकविषु प्रचेता मर्त्येष्वग्निरमृतो निधायि' (७. ४. ४.) । अयमग्निः क्रान्तदर्शी 'अकविषु' अतथाभूतेषु दृष्टिहीनेषु मर्त्येषु अयममृतो न्यधायि इति स्फुटार्थो वसिष्ठस्य मन्त्रः । 'महानसि अध्वरस्य प्रकेतः ………… न ऋते त्वदमृता मादयन्ते' (७. ११. १.) । स्वर्गाध्व-प्रयाणात्मकं यज्ञं अधिकृत्य प्रकृष्टज्ञानोपेतः अग्निः । तस्मादृते देवानां सम्मदो न विद्यत इति वसिष्ठः पुनरत्र ब्रूते । 'अग्निं सूनुं सहसो जातवेदः …………द्विता योऽभूदमृतो मर्त्येषु' (८. ७१. ११.) । स्वयं दिव्योऽपि अत्र मर्त्येषु अमर्त्य इति द्विधाभूत इत्युक्तम् । 'अपश्यमस्य महतो महित्वं अमर्त्यस्य मर्त्यासु विक्षु' (१०. ७९. १.) । अग्नेः अमर्त्यस्य महतो महिमानं मर्त्येषु अहमद्राक्षमिति सौचीकस्य मन्त्रदृष्टेस्तात्पर्यम् । अत्रि-मण्डले स्पष्टार्थ एष मन्त्रो भवति— 'अग्निर्देवेषु राजति अग्निर्मर्तेष्वाविशन् । अग्निर्नो हव्यवाहनः अग्निं धीभिः सपर्यत ॥' (५. २५. ४.) इति । तत्रैव मण्डले (सू. ११ ऋ. २.) 'यज्ञस्य केतुं' इति मन्त्रे, यज्ञविषयक-प्रज्ञाविशेषवान् अग्निः, होता इन्द्रेणान्यैश्च देवैः सह एकं रथं अध्यासीनो बर्हिरेतीति कथितम् । 'यो मर्त्येष्वमृत ऋतावा' (१. ७७. १.) इति राहूगणस्य, 'विश्वायुर्यो अमृतो मर्त्येषु' (६. ४. २.) 'स मर्त्येष्वमृत प्रचेताः' (६. ५. ५.) 'उप वो गीर्भिरमृतं विवासत' (६. १५. ६.) इति भारद्वाजस्य च मन्त्रवर्णाः मर्त्येष्वमृतमग्निमुद्घोषयन्ति ॥

एवममर्त्योऽग्निरस्ति चेदस्मासु, स वर्तेतैव कुत्राप्यस्मासु गूढे स्थाने । तच्च हृत्पद-वाच्यं रहस्यमन्तरमाहुर्मन्त्रद्रष्टारः । तदेव गुहापदेन व्यवह्रियते । अग्नेरावासः सा गुहा बहुषु मन्त्रेष्वाम्नायते । तदत्र पराशर-विश्वामित्र-वामदेवानां सूक्तेभ्यः सङ्क्षेपतो मन्त्रभागान् उल्लिखामः—

'पश्वा न तायुं गुहा चतन्तं नमो युजानं नमो वहन्तम्' (१. ६५. १.), 'हस्ते दधानो नृम्णा विश्वान्यमे देवान् धाद् गुहा निषीदन् । विदन्तीमत्रनरो धियं धा हृदा यत्तष्टान् मन्त्रानशंसन्' (१. ६७. २.), 'विश्वायुरग्ने गुहा गुहं गाः' (१. ६७. ३.), 'य ईं चिकेत गुहा भवन्तम्' (१. ६७. ४.), 'चित्रं सन्तं गुहा हितम्' (४. ७. ६.), 'गुहा चरन्तं सखिभिः शिवेभिः' (३. १. ९.) । एवमादयो मन्त्रवर्णा अग्नेर्गुहावासं रहस्यं

अन्तर्निहितं हृदयमुदीरयन्ति ॥

अथ सप्ततत्त्वात्मकं विश्वं अस्मिन्नमर्त्येऽग्नौ निहितं इति सर्वथा सप्तकसम्बन्धित्वेन अयं वर्ण्यते । सत्त्वं बलं ज्योतिः आनन्द इति सर्वाणि सप्तधा भवन्तीति गीयते, अत एवाग्नेः सप्तकसम्बन्धित्वं बहुधोक्तम्— 'आ यस्मिन् सप्तरश्मयस्तता यज्ञस्य नेतरि' (२. ५. २.), 'दमे दमे सप्त रत्ना दधानोऽग्निर्होता निषसाद यजीयान्' (५. १. ५.), 'इदं मे अग्ने कियते पावकामिनते गुरुं भारं न मन्म । बृहद् दधाथ धृषता गभीरं यह्वं पृष्ठं प्रयसा सप्तधातु॥' (४. ५. ६.) । सप्तभूमिकाभारं दुर्भरं वोढुं न शक्तोऽस्मि, अतः पावक, भोः! इमं च चिन्ताभारं मह्यं मा दाः इति सारांशः । 'सप्त स्वसॄररुषीर्वावशानो विद्वान् मध्व उज्जभारा दृशे कम् ।' (१०. ५. ५.) इति त्रितः । अन्यत्र— 'सप्त धामानि परियन्नमर्त्य' इति (१०. १२२. ३.) । 'सप्त ऋषयः प्रतिहिताः शरीरे' इति शुक्लयजुर्वेदीयं मन्त्रं यास्केनोदाहृतं च स्मारयामः । तस्मात् सप्त गिरयः, सप्त सिन्धवः, सप्त ऋषयः, सप्त स्वसारः, सप्त धामानि इति सर्वत्र सप्तकं श्रूयते । इदं च प्रागुक्तप्रकारेण सप्ततत्त्वात्मिकां विश्वसत्तामधिकृत्य तद्गतज्ञानशक्तितेजोविशेषवद् भूमिकापरम्पराणां तदाधिकारिकदेवतानां वा यथासम्भवं द्योतकमिति बोध्यम् ॥

अथ अग्निस्वरूपविचारे मुख्यप्रसक्त्या अपां स्वरूपं विचारयितव्यम् । का इमा आपः सिन्धवो वा, याः सप्तविधा उद्घोष्यन्ते वेदमन्त्रेषु? ता ऋतस्य धाराः परस्याश्रितः प्रवाहाः, परचित्तेजोवाहिन्यः । इमाश्च तदावरकस्य वृत्रासुरस्य वज्रेण हत्या देवराजेन इन्द्रेण विसृज्य निर्मुच्यन्त इति बाह्याः । पार्थिवचैतन्ये ऋतधाराप्रवेशं यः प्रतिरुणद्धि तस्यासुरस्य बाह्यः सङ्केतो वृत्रशब्दवाच्यो मेघ इत्यवधेयम् । वसिष्ठवामदेवसूक्तेभ्यः तत्रापि विशेषतः 'समुद्रज्येष्ठाः' (७. ४९.) 'समुद्रादूर्मिः' (४-५८) इत्याभ्यां स्फुटमिदमवगम्यते, यदखण्डसत्यस्वरूपस्य रूपकं बिम्बमेव समुद्रः, आप एव ऋतचिद्धाराः, सिन्धवः सप्त विश्वभूमिका-सप्तकगत-सर्जनधारणतेजोवाहिन्यः शक्तयश्चेति । इदं च सङ्केतरहस्यं वैश्वामित्रस्य आद्यस्य आग्नेयसूक्तस्य तात्पर्यविचारादसन्दिग्धमवधार्यते । तदत्र समासतः प्रधानविषयान् आवेदयामः ॥

अग्निमदर्शन्नप्सु देवाः । तस्मिन् सप्त बलिष्ठाः (यह्वीः) पुष्टिं प्राप्ताः । स च मोदवान् अभवत् । जन्मना श्वेतः संवर्धनेन रक्तः (अरुषः) अरुणो वा । ताः अश्वाः तं नवप्रसूतं शिशुं अभिजग्मुः (अभ्यारुः) । ज्योतिर्वसानः अप्सु परितो वसन्

अन्यूनानि विपुलानि वैभवानि स स्वयं अकल्पयत्…… नित्ययौवना देव्यस्तमेकं गर्भं दधिरे । ताश्च सप्तवाण्यः । प्रकाशमानधीसारमूले मधुनः प्रवाहेषु विश्वरूपेषु तस्य वपुर्विततमभवत् । अत्र धात्र्यो नद्यः (धेनवः) स्वयं पोषिका अवर्तन्त । साधोस्तस्य देवस्य द्वे च मातरौ विशाले भूत्वा सुसङ्गते संवृत्ते । जन्मना स पितुः सत्त्वसमृद्धिं अवेदीत् । स स्वीया धारा व्यसृजत्, स्वीया विपुलाः सरितश्च । स्वयमेकः बह्वीनां वर्धमानानां मातॄणां स्तनन्धयो भूत्वा समवर्धत । ऋते बृहति अवियोज्याभिः स्वसृभिः (जामिभिः) तस्मै परिकल्पितं वासं स स्वीचकार । ……अपारे स्वीये रहसि स्थाने वसन्तं तं अमृतं दुदुहुस्ताः । अयं वैश्वामित्रसूक्तैकदेशस्य सारांशः ॥

अथ मन्त्रस्थपदानि तत्र तत्रोपयुज्य सङ्केतार्थविवरणं करिष्यामः । इमाश्च सप्त (नद्यः) आपः सत्या दिव्याश्च भवन्ति । उच्चैर्धाम्नस्ता अग्निमानेतुरत्र प्रतिष्ठापयितुम् । स चाग्निर्दिव्यं रहस्यं वस्तु, पृथिव्यां ओषधीषु निहितः, अरणिभूतयोः द्यावापृथिव्योः घर्षणादाविर्भावयितव्यः । अतो द्यावापृथिव्योः शिशुरुच्यते, शुद्धसत्त्वमनःप्रधाना द्युस्थाना चिदेव द्यौरुच्यते । पार्थिव-मनःप्रज्ञाप्रधाना जागरितस्थाना चित् तु पृथिवीति सङ्केतिता । उभयोर्व्यापारबलात् प्रयासतो मर्त्यः तद्रहस्यं वस्तु अग्न्याख्यं निष्पादयेत् । दिव्यास्वप्सु तु स सुदर्शः, बलेन ज्ञानेन भोगेन च युक्तः सुगमः सुखेन जातो भवति । जन्मना शुभ्रः क्रियया वर्धमानोऽरुणो जायते । जातमात्राय तस्मै देवाः प्रादुस्तेजो बलं वपुश्च । सप्त महत्यो (धेनाः) नद्यस्तं वर्धयन्ति । धेनुशब्दवाच्याः सिन्धवोऽत्र अश्वा इति अभिवर्णिताः । अत्रेदं कारणं भवति । धेनुपर्यायो गौः ज्ञानात्मिकायाः शक्तेः सङ्केतो वेदे । अश्वस्तु क्रियात्मिकायाः शक्तेः । अश्वोऽत्र प्राणगता कार्यकारकशक्तिः । अग्नेराधाने जनने च अप्स्वरूपा धेनवः प्राणात्मकतां भजन्ते । स च प्राणः प्राणिति, करोति, कामयते, भुनक्ति च । अग्निरेव प्रथमं पार्थिवो घर्मात्मको भूत्वा, ततः परं प्राणो भवति, अन्ते च स्वर्ग्योऽग्निश्च । एवं सप्तविधा आप ऊर्ध्वमेत्य शुद्धसत्त्वमनः-प्रधाना (यह्वीः) दिव्या भवन्ति । उत्तमं प्रज्ञानं सत्यमेव तासां उद्भवस्थानम् । तस्मादेव ताः प्रवहन्ति । सप्तवाचस्तु (सप्त वाणीः) सर्वेश्वरस्य देवस्य त्रिसृष्टिरूपा आविष्कारशक्तय इति ग्राह्यम् । सर्वेषां वस्तूनां पिता प्रभुः पुमान्, स तेषां रहस्योद्भवधामनि गूढः स्थितः । तच्च उत्तमं चित्पदम् । अग्निः सखिभिर्देवैः सप्तभिरद्भिश्च सह तत्पदमारोहति । स चाग्नेः स्वर्गारोहः अस्मासु मर्त्येषु यजमानेषु पृथिवीशब्द-

लक्षितां जागरितस्थानां प्रज्ञां अजहदेव निर्वर्त्यते । अग्निस्तेन स्वर्गारोहेण सर्ववस्तूनां पितुः समृद्धस्य मधुनो मूलमधिगम्य तानि मधून्यावर्जयन् वर्षत्यसत्प्राणेषु । स स्वयं गर्भं दधानः पुत्रो जायते । अत एव स नित्यः कुमारः, शुक्रं ज्योतिः, शुभ्रः पुमान्, एक आत्मा वैश्वानरात्मना मानवे मर्त्येऽमर्त्यः सिद्धो भवति । कविक्रतुः, दिव्यः शिशुः, (देवकुमारः) तस्येह जन्म, तस्य पोषः, अद्भिः संवर्धनं, नद्य एव आपः, धेनवः ता एव पुनरश्वाः इत्यादयः सङ्केतरहस्यार्थान् अन्तरेण तात्पर्यसङ्गत्या नोपपत्तिं क्षमन्ते । यदि सङ्केतगोप्यमन्तरा कमप्यर्थमेषां निर्णेतुं प्रयतेमहि, असम्भावितकल्पनैव सिध्येत्, न चेदुन्मत्तप्रलापित्वं मन्त्रद्रष्टृष्वारोपितवन्तः स्याम । ईदृशाः सङ्केताः स्वयमेव विवृतगूढार्थाः स्पष्टं लक्ष्यन्तेऽन्यत्रापि सूक्तेषु । 'समुद्रादूर्मि'रित्यारभ्य 'तमश्याम मधुमन्तं तमूर्मिम्' इत्यन्तं वामदेवसूक्तं प्रस्फुटं वेदरहस्यं लक्षयतीति कः सन्देहः? अथ च "'घृतस्य नाम गुह्यं यदस्ति', 'जिह्वा देवानां अमृतस्य नाभिः', 'एता अर्षन्ति हृद्यात् समुद्रात्', 'घृतस्य धारा ········· सरितो न धेना अन्तर्हृदा मनसा पूयमानाः', 'अग्निं योषाः कल्याण्यः स्मयमानासो अग्निम्', 'धामन् ते विश्वं भुवनमधिश्रितम्', 'अन्तः समुद्रे हृद्यन्तरायुषि" इत्यादि-वाक्यवाक्यैकदेशेभ्यः इदं स्फुटमवगम्यते, यद् घृतं मधु धेनुः आपः योषाः हृत् अन्तः समुद्रः—इत्यादयः शब्दाः स्वीयान् महतो रहस्यार्थान् स्वयमेव विवृण्वत इति । ईदृशानां साङ्केतिकानां रूपाणां कानिचित्पुराणेषु स्पष्टमवशिष्टानि लक्ष्यन्ते । क्षीरसागरवासी अनन्तशयनो विष्णुरित्युक्ते, नायमनन्तः कोऽपि प्राकृतः सर्पः, न वा क्षीरं च मधुरं पार्थिवं गव्यं, नापि समुद्रो दुग्धवारां राशिः । सर्वव्यापी विष्णुः परिच्छेदशून्ये अनन्ते सद्भावे आनन्दमये नित्ये वस्तुनि अवतिष्ठत इति सङ्केतार्थः । ननु पुराणानां कर्तारः पुरोहिता जडबुद्धयः सूर्यचन्द्रोपरागतत्त्वस्यापि अनभिज्ञाः कथं गहनानि तत्त्वानि जानीयुः? साधारणपार्थिव-सर्प-क्षीरसागरानेव ते ब्रुवते, वयमेव सङ्केतार्थं कल्पयाम इति चेत्, नाऽवश्यकी कल्पनाऽस्माभिः कार्या । त एव लाक्षणिकैः शब्दैः सङ्केतकल्पनां मुद्रयित्वा गहनानि तत्त्वानि सार्वलौकिकदर्शनाय ख्यापयामासुः । ते च शब्दाः, व्यापको 'विष्णुः' शेषसर्पः 'अनन्तः' आनन्दमयं 'मधुरं क्षीरं' नित्याखण्डसत्स्वरूपः 'समुद्रः' इति बोध्याः ॥

अथ यो वेदेऽग्निः कुमारः कीर्त्यते, स पुराणेषु अग्निजः स्कन्द इति कथ्यते । पुराणेषु कुमारकथाप्रस्तावे ये विषयाः स्मर्यन्ते, ते सङ्केतभाषावेषान्तरैर्वेदे श्रूयन्ते ।

यद्यपि कथाविस्तरेषु तत्र तत्र पुराणानि विप्रतिपद्यन्ते, तथाऽपि सर्वाणि पुराणानि कुमारतत्त्वमधिकृत्य प्राधान्येन एककण्ठानि भवन्ति । महाभारतावलोकने निस्संशयं इदं भवति, यद्वनपर्वणि आङ्गिरसोपाख्याने स्कन्दोत्पत्तिविवरणे लक्ष्यमाणा विषया वेदेभ्य एवोद्धृत्य प्रोक्ता इति । भाषाभेदेऽपि क्वचिद्वैदिकान् शब्दान् प्रायशो वेदप्रतिपादितानेवार्थानाविष्करोति महाभारतसंहिता । परस्मात्स्वधाम्नः पितुरागतः पुत्रोऽग्निः कुमारो वर्ण्यते वेदे, महादेवात्स्कन्नं तेजः स्कन्दः सुब्रह्मण्यः कुमारो भारते पुराणे च । ओषधीषु जातो वेदे, शरवणे पुराणे, अप्सु संवर्धितो वेदे, गङ्गायां पुराणे । धेनुभिः संवर्धनं वेदे, कृत्तिकाभिः क्षीरदानं पुराणे । आपो गावोऽश्वा वा मातरः स्वसारो वा सप्त वेदे, पुराणे तु षडेव मातरः एकां परमपदभूमिकां मातरं वर्जयित्वा ॥

अथ च महाभारते इन्द्रो मानसशैले तिष्ठन्नग्नेरागमनं प्रतिपालयति स्मेति पठ्यते । 'स शैलं मानसं गत्वा ध्यायन्नर्थमिदं भृशम्' (वनपर्व-अ०. २२२.), धेनवो नद्यो मातरः अग्नेर्धात्र्य इति च पठ्यते— "एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्तिताः" (अ०- २२१. श्लो०- २६.) । एवं स्कन्दोत्पत्तिकथायां विचार्यमाणायां वैदिकी सङ्केतभाषा पुराणकथाया मूलं भवतीत्यसंशयम् । स्कन्द एवाग्निरिति संशयच्छेदकं वाक्यं वेदाधारकं ब्रूते महाभारतसंहिता । अद्भुतनामकोऽग्निर्यो वेदे वर्णितः स एव स्कन्द इति स्पष्टमाह— 'अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्तितम्' इति (वनपर्व- २२१-३०.) । तथा अग्नयो बहवः प्रोक्ता आङ्गिरसोपाख्याने । तत्र अद्भुतोऽग्निर्वेदे वर्णितः किल । यदि वेदे अग्निरद्भुतपदेन व्यवहृतो दृश्येत, तदा महाभारतकारो वेदसूक्तार्थज्ञानबलात् पुराणप्रकारककथायां अद्भुताख्यस्याग्नेः स्कन्दस्य इतिवृत्तं निवेशितवानिति शक्यं वदितुम् । परं तु, यथा अग्निः पुरोहितो यज्ञस्य, होता, मुखं दूतो वा देवानां, सेनानीः, सप्तजिह्व इति कीर्त्यते, न तथा अद्भुतपदं अग्निलिङ्गत्वेन प्रख्यातं भवति । तस्मादत्र विचारो भवति । ऋग्वेदे पञ्चविंशत्यधिकेषु स्थलेषु अद्भुतपदं प्रयुक्तं दृश्यते, अन्यत्र चतुर्षु समासान्तर्गतं भवति, यथा 'अद्भुतैनसः' इति । अत्र प्रथमं अद्भुतपदार्थनिर्णयः कार्यः । अद्भुतं लौकिकसंस्कृतभाषायामिव वेदेऽपि आश्चर्यपर्यायो भवतीति निर्विवादम् । 'महत्' इत्यर्थेऽपि बहुत्र प्रयुज्यते, तथा सायणीया व्याख्या च भवति । विश्वातीतं परं सत्यं महत्पदवाच्यं वेदे, यथा 'महद्देवानामसुरत्वमेकम्' इत्यादौ । तदेव 'महत्' 'अद्भुतं' आश्चर्यं भवति । इदमेव प्रतिबिम्बितं 'आश्चर्यवत्पश्यति' इत्युपनिषद्वाक्ये ।

उपनिषत्सु ब्रह्मपदमपि बृहतेर्धातोरर्थानुगमात् महत्पर्यायो भवति । 'महतो महीयान्' इत्यौपनिषदः पुरुषश्च श्रूयते । परं ज्योतिः पितैव कुमारो जात इति वेदे अद्भुतसंज्ञोऽग्निर्गीयते— 'न भूतं अद्भुतं' इति नैरुक्तं निरङ्कुशं निर्वचनं क्वचिदवलम्ब्य व्याचक्षाणोऽपि सायणः प्रायशः 'आश्चर्य' 'महत्' इत्येव व्याचष्टे । अत्र प्रथमं समासान्तर्गतं अद्भुतपदं विमृश्य, ततः परं तत्पदं अग्नि-परत्वेन प्रयुज्यमानं परीक्षिष्यामहे ॥

'अद्भुतैनसः' इति मरुतां विशेषणत्वेन सकृत्, आदित्यानां च सकृत्, एवं द्विः प्रयोगो दृश्यत ऋक्संहितायाम् । अद्भुतं न भूतं एनः पापं येषु ते मरुत इति सायणो मन्यते । नैतदृजु भवति । अद्भुतानि एनांसि येषु त इति उपपन्नतरम् । कुतः? मरुतश्चण्डकर्माणः प्रथिता वेदे । चण्डकर्माणः पापा इति लोके साधारणोऽभिप्रायः । मरुतां कर्माणि चण्डान्यपि न साधारणानि तस्मादद्भुतानीत्याशयेन अद्भुतपापा इत्युक्तम् । अस्मासु मानुषेष्विव तेषु पापं न विद्यत इति फलितोऽर्थः । अत्र अद्भुतं आश्चर्यमिति ग्रहणेन सायणीयतात्पर्यं सिध्यति, स्वच्छन्दनिर्वचनस्य अनपेक्षता भावपुष्टेरक्षतिश्चेति अवधेयम् । प्रायः सर्वत्र अद्भुत इत्यग्नेर्व्यपदेश इति निरूपणाय सर्वाणि ऋग्वेदीय-प्रयोगस्थलानि परीक्षितव्यानि । यत्र कुत्रापि अन्यदैवत्ये सौम्ये ऐन्द्रे वा मन्त्रे तत् पदं प्रयुक्तं दृश्येत, तत्रापि अग्निगुणबोधकानि विशेषणानि प्रयुज्यन्ते । तच्च पुरस्तात् प्रदर्शयिष्यामः । केवलं आश्चर्यार्थप्रयुक्तानि स्थलानि वर्जयित्वा देवतापरत्वेन निर्दिष्टानि एव निरीक्षामहे ॥

'न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतम्' (१. १७०. १.) । अत्र परं वस्तु निर्दिष्टम्— 'स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः' (१. ७७. ३.) । अत्र अद्भुतस्य महतो भूतस्य सारथिरग्निरित्युक्तम् । 'सदसस्पतिमद्भुतं प्रियमिन्द्रस्य' (१. १८. ६) इन्द्रस्य प्रियः किल अग्निरद्भुतः । 'शुचिः पावको अद्भुतः मध्वा यज्ञं मिमिक्षति' (१. १४२. ३.) । अग्निमद्भुतं गायति दीर्घतमाः । 'देवो देवानामसि मित्रो अद्भुतः' (१. ९४. १३.) अत्राप्यग्निरद्भुतः । 'विशां राजानमद्भुतं अध्यक्षं धर्मणामिमम् । अग्निमीळे स उश्रवत्' (८. ४३. २४.) । अग्निरद्भुतः स्पष्टः । 'त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना' (५. १०. २.) । 'त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः' (५. २३. २.) । अग्निरेवाद्भुतः सम्बोध्यते— 'द्युम्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः' (२ ७. ६.) अग्निरेवात्र देवता । 'व्यस्तभ्नाद्रोदसी मित्रो अद्भुतः' (६. ८. ३.)

अग्निरेव निर्दिष्टः । 'स त्वं सुप्रीतो वीतहव्ये अद्भुत' (६. १५. २.) अग्नेरेव सम्बोधनम् । 'स्तोता यत्ते अनुव्रत उक्थानि ऋतुथा दधे । शुचिः पावक उच्यते सो अद्भुतः ॥' (८. १३. १९.) अयं ऐन्द्रो मन्त्रः । अत्रापि अग्निधर्मवत्त्वेन स्तुता देवता । शुचिः पावकः, अद्भुत इत्यग्निविशेषणानि प्रयुक्तानि भवन्ति । 'त्वं राजेव सुव्रतो गिरः सोमा विवेशिथ । पुनानो वह्ने अद्भुत ॥' (९. २०. ५.) अत्र सोमो देवता, सम्बोधने 'वह्ने' 'अद्भुत' इति प्रयुक्तम् । 'शास इत्था महानसि अमित्रखादो अद्भुतः' (१०. १५२. १.) अत्र सकृदेव अग्निलिङ्गवर्जं इन्द्रः अद्भुत इति स्तुतः । 'यो अस्मै हव्यैर्घृतवद्भिरविधत्...... उरुचक्रिरद्भुतः' (२. २६. ४.) । ब्रह्मणस्पतिरत्र देवः, सकृदेव अद्भुतविशेषणमस्य लक्ष्यते । सकृत् मित्रावरुणौ अद्भुतौ (५. ६६. ४.) इत्युक्तम् । सकृत् समासान्तर्गतं अद्भुतपदं मित्रावरुणपरं भवति– 'अद्भुतक्रतू' (५. ७०. ४.) इति । तथा सकृत् 'अद्भुतक्रतुम्' (८. २३. ८.) इति अग्निपरम् । 'अद्भुतैनसां' (५. ८७. ७.) इति मरुतां विशेषणं प्राग् विचारितं स्मार्यम् । 'अस्ति देवा...... आदित्यास अद्भुतैनसः' (८. ६७. ७.) इति अन्यत्र भवति ॥

ऋग्वेदे अद्भुतपदप्रयोगस्थलानि सर्वाणि परीक्षितानि । साधारण्येन केवलं आश्चर्यार्थे प्रयुक्तानि नेह दर्शितानि, प्रयोजनाभावात् । सर्वत्र अग्नेर्वैशिष्ट्यं अद्भुतपद-द्योतितं भवति । कदाचिदत्र दर्शितप्रकारेण अन्यदेवताविशेषणत्वेन दृष्टमिति तथ्यम् । न तावता ह्रासापत्तिरद्भुतपदविशेषितस्य अग्नेर्वैशिष्ट्यस्य । परस्य ज्योतिषः अग्निरूपेण अवस्थितस्यैव अद्भुतशब्देन व्यवहारो वेद इति निरूपितम् । एकस्यैव परस्य देवस्य बहु-देवताकारत्वात् क्वचिदन्योऽपि देव इन्द्रः सोमो वा अद्भुतविशेषणेन प्रतिपाद्यते । अग्निरेव सर्वा देवता इत्यपि गीयते । यथा वैश्वानरीयसूक्तेषु क्वचित् सूर्य एव प्रति-पाद्यमानेऽपि वैश्वानरपदं अग्निमेव लक्षयति, तथा अद्भुतपदं अन्यदेवताविशेषणतया कदाचित्प्रयुक्तमपि अग्निमेव विशिष्टतया ख्यापयतीत्यवधार्यम् ॥

'अद्भुतस्याग्नेर्माहात्म्यं वेदेषु परिकीर्तितम्' आख्यातुं प्रतिज्ञाय महाभारतकारः स्कन्दोत्पत्तिवृत्तान्तं कथारूपेणोपपादयामास । इदं च वेदमूलत्वं कुमारतत्त्वस्य वैश्वा-मित्राग्निसूक्तार्थविचारादुदाहृताभ्य ऋग्भ्यश्च विस्पष्टं भवति । यद्यपि स्कन्दकथासारांशः पुराणेषु महाभारतसंहितायां च उभयत्रैक एव भवति, तथाऽपि वैयासिकी संहिता भाषया भावेन च वेदभाषायाः सङ्केतरूपत्वनिरूपणे बहुतरामुपयुक्तेति तामेवोदाहार्ष्म ।

एवं वृत्रवधादि-पुराणकथानां च वेदमूलत्वं बोध्यम् । अत्र तु अग्निस्वरूपविचार एव प्रसक्तः, तदनुप्रसक्त्या पौराणिकस्कन्दकथामूलपरीक्षणेन वेदभाषायाः सङ्केतरूपत्वं दृढीकृतम् ॥

स एष ऋचां राशिः, ब्रह्मकोशो व्याख्यास्यते । गूढार्थप्राधान्येऽपि कर्मोपयोगितया व्यवस्थितानां ऋचां पदार्थविचारे गवाश्वादीनि साङ्केतिकपदानि अपरिहार्यैव अन्तरर्थानुसारि-तात्पर्यपरिग्रहे व्यवसायः कार्यः । अग्न्यादीनि देवतानामानि तत्तद्गुणबोधकैर्वाचकैर्व्याख्यातुं शक्यान्यपि संज्ञापदानीव पदपरिवृत्तिं न सहन्त इति बोध्यम् । अग्न्यादिदेवानां क्वचिद्बाह्यप्रपञ्चे भौतिकाग्न्यादिरूपेणावस्थानं केवलं साङ्केतिकमिति मन्तव्यम् । देवतानां स्वरूपाणि तु दिव्येनाभ्यन्तरेण वोन्मीलितेन चक्षुषा ग्राह्याणि । एकैकोऽपि देवः अद्वितीयस्य परस्य देवस्य अङ्गं गुणः शक्तिविशेषो वा इत्युक्तौ अग्न्यादिः देवः न केवलं शक्तिर्गुण एव वा अङ्गं वा भवति, किं तु स्वयं गुणी शक्तः, व्यक्तिर्वेति बोध्यम् । समस्तेऽपि ऋग्वेदे एकरूपा सङ्केतव्यवस्था । यद्यपि ऋषीणां मन्त्रदृष्टिषु क्वचिद्भावपुष्टिरधिका क्वचिद्गाढा सरला वा वाक्यगतिः, शब्दार्थमाधुर्यगाम्भीर्यादौ साम्यं वा न लक्ष्येत, क्वचित्सङ्केतगूढार्थबाहुल्यं वा दृश्येत, तथाऽपि सर्वेषां मन्त्रद्रष्टॄणां एकमेव परमं लक्ष्यं, एकमेव रहस्यं, एक एव सङ्केतसम्प्रदायः । अत एव रहस्यार्थपरिज्ञानमक्लिष्टं भवति । एकरीत्यैव ह्यत्र साङ्केतिकशब्दार्थपरिग्रहो भवति । सङ्केतव्यवस्थापरिज्ञानं वेदरहस्यावगाहनस्य द्वारं भवतीति माधुच्छन्दसेभ्यः सूक्तेभ्य ऋक्संहितायामादिमेभ्य एवावगम्यते । 'अग्निमीळे' सूक्तमेव वेदरहस्याधिगमाय प्रथमसोपानतया संहितायां प्रारम्भे संहिताकारैर्निवेशितमिव लक्ष्यते । इदं च मन्त्रार्थविचारावसरे सुगमं स्यादिति असंशयम् । 'अग्निमीळे' सूक्तजपस्य सर्ववेदपारायणफलं प्राहुः प्राञ्चः । सर्ववेदरहस्यज्ञानबीजं अत्र द्रष्टव्यमित्याशयेन तथा फलश्रुतिरिति बोध्यम् ॥

अथ ऋग्वेदसंहितायाः द्विप्रकारको विभागो भवति । अष्टकानि, अध्यायाः, वर्गाः, मन्त्राश्चेति एको विभागः । अयं चाध्ययनोपयोगी । मण्डलानि, अनुवाकाः, सूक्तानि ऋचश्चेत्यपरो विभागः अनुष्ठानोपयोगी । अनुष्ठानमपि द्विविधम् । कर्मानुष्ठानं, जपाद्यनुष्ठानं चेति । मन्त्राणां कर्मभिः सम्बन्धं विनियोगमाहुर्याज्ञिकाः । तथा विशेषविनियोगो मन्त्राणां तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः कर्मपराणामुपयुक्तो

भवति । कृत्स्नस्यापि वेदस्य स्वाध्याये जपे ध्याने च सामान्यविनियोगो बोध्यः । अयमेव वेदरहस्यार्थपराणामस्माकमपेक्षणीयः । तां तां देवतां साक्षात्कर्तुं मन्त्रार्थानुसन्धानबलभूयसि जपध्यानपारायणात्मके अनुष्ठाने सूक्तमन्त्राणां सामान्यविनियोगो द्रष्टव्यः । मन्त्राक्षराणामनितरसामान्यप्रभावत्वेऽपि अर्थानुसन्धानमन्तरा भस्मन्यनग्नावाज्यहोमवत् पर्यवस्येत् स्वाध्यायः । अत एव अर्थविचारवर्जं स्वाध्यायी 'स्थाणुरयं भारहर' इति निन्दास्पदमभूत् पूर्वेषाम् । कर्मपारम्यपक्षप्रमुखा आश्वलायनप्रभृतयः सूत्रकारा अपि वेदाध्यायिना अन्तर्मुखेन एकाग्रमनसा भाव्यमित्यभिप्रायेणैवमाहुः— 'यत् स्वाध्यायमधीते स ब्रह्मयज्ञः' 'द्यावापृथिव्योः सन्धिमीक्षमाणः सम्मील्य वा यथा वा युक्तमात्मानं मन्येत तथा युक्तोऽधीयीत स्वाध्यायम्' इति । तस्मात् 'स्वाध्यायोऽध्येतव्य इति ब्रह्मयज्ञादौ शब्दप्राधान्येऽपि अनुष्ठानं अर्थानुसन्धानपूर्वकमेव फलवदिति सिद्धम् । सोऽयं मन्त्रार्थविचारो देवतास्वरूपादिरहस्यविज्ञानसम्पत्तये जिज्ञासूनां कर्मबद्धश्रद्धानामप्युपकारकः स्यादित्याशंसामहे ॥

इति श्रीमहर्षि-रमणभगवत्पादानुध्यात-श्रीभगवद्वासिष्ठगणपतिमुनिप्रवरान्तेवासिनः
पूर्णयोगाचार्य-श्रीमदरविन्दभगवत्पादानुध्यातस्य
भारद्वाजस्य विश्वेश्वरसूनोः
कपालिनः कृतिषु

वेदगुप्तार्थसिद्धाञ्जनस्य ऋक्संहिताभाष्यस्य

भूमिका समाप्ता

# भूमिका–विषयानुक्रमणिका.

## प्रथमः खण्डः (पुट १–३०)


| पुट | विषय |
|---|---|
| १–७ | भूमिकास्थ-विषयप्रतिपादनार्थाः सङ्ग्रहश्लोकाः ॥ |
| १–२ | ग्रन्थारम्भे जयवादः सर्वेश्वरस्य तमसःपरस्तादेकस्य आत्मनः, तस्यैव शब्द-मूर्तिधरस्योत्तमस्य पुरुषस्य, तस्यैव पुनर्वेदमूलस्य ऋचां धाम्नः परमव्योम्नश्चेति एवं त्रेधा जयवादेन नमस्काराक्षेपः । वेदरहस्यप्रदर्शिन आचार्य-श्रीमद्-अरविन्दपदमहसोऽनुस्मृतिपूर्वकं वेदमर्मविभेदनार्थक-ग्रन्थकरणप्रतिज्ञा । वेद-प्रतिपादितविषयानधिकृत्य मतभेदोपन्यासः, सामयाचारिकैः प्रतिपन्न-काण्डद्वयात्मिका वेदव्यवस्था, व्याख्यातॄणां सायणमाधवाचार्यस्य आदरा-तिशयः ॥ |
| ३–४ | नव्यानां भारतीयेतिहासान्वेषिणां पाश्चात्यानां वेदार्थनिर्णयाय प्रवृत्तानां सायणीयं भाष्यं महानाधारः । वेदान् ऋषीन् तत्समयाचारादीन् अधिकृत्य तेषां मतम् ॥ |
| ५–६ | अत्र अरविन्दश्रीचरणानां वेदरहस्यार्थदर्शनम्– तच्च गोप्यं भाषाविशेषेण सङ्केतात्मतया स्थितम्– ऋषिमन्त्रदेवतायजनफलानां यथार्थस्वरूपोपन्यासः ॥ |
| ७–८ | गूढार्थपक्षमस्मदीयं अस्वीकार्यमित्येकेषां अधुनातनानां आक्षेपोपन्यासः ॥ |
| ९ | विपक्षोक्तिसारांशविमर्शनारम्भः । विमतोद्भाविताखयो दोषाः, आक्षेपहेतवः ॥ |
| १०–१२ | मानुषवर्गीय-इतिहाससंशोधनात् पाश्चात्यपण्डितैः साधितस्य ऐतिहासिक-सिद्धान्तस्य विरुद्धोऽस्मदीयगूढार्थसिद्धान्त इति प्रथम आक्षेपः । तस्य सविचारं प्रत्युत्तरम् । श्रीमदरविन्दपादैः प्रतिपादितस्य भारतीय-आध्या-त्मिकेतिहासतत्त्वस्य उदाहरणम् ॥ |
| १३–१५ | कथं ऋजुमार्गमिच्छन्तोऽपि प्राज्ञाः पाश्चात्या ऋग्वेदऋषीणां प्राकृतावस्थां निश्चिन्वन्तीति विचारः । तदनुयायिनां भारताभिजनानां पाश्चात्यक्षुण्ण- |

वर्त्मनि एतावताऽपि कालेन व्यामोहो न न्याय्यः । प्राचीनार्षरहस्य-जिज्ञासया गूढार्थविवरणपक्षपरीक्षायां प्रवृत्तिरावश्यकी धीमतां तेषाम्, न चेद् दुर्विपाक एव भवेत् तद्विमर्शवैदुष्यस्येति मन्त्रतात्पर्योदाहरणपूर्वकं कथनम् ॥

१५–१७ द्वितीयाक्षेपोपन्यासः– सायणीयसम्प्रदायभाष्यस्य विरुद्धो वेदरहस्यवादः इत्युक्तेर्विमर्शनम् । त्रिविधं परिज्ञानं इति यास्कोक्तिमुदाहृत्य सायणीये व्याख्याने दृश्यमानं असामञ्जस्यादिकं निरीक्षितम् ॥

१७ पूर्वमीमांसकसिद्धान्तविरोधी वेदरहस्यार्थवाद इति तृतीयो जघन्य आक्षेपः– तस्योपन्यासपरिहारौ ॥

१८ सायणभाष्यस्य अपरिहार्यत्वं वेदार्थविचारे इति प्रतिपादनम् । गुणदोष-स्मरणपूर्वकं भाष्यस्य प्रशंसा ॥

१९ कर्मैकपरत्वपक्षे तु दोषः, गीतावाक्यस्य न्याय्यता च ॥

२० स्वपक्षोपन्यासः– ऋग्वेदोऽत्र विचारविषयः- बहिरर्था अन्तरर्थाश्चेति द्व्यर्था मन्त्राः ॥

२१–२२ अर्थद्वयवच्छब्दप्रयोगव्यवस्था, भाषास्वरूपम्, शब्दानां प्रवृत्तिः;शब्दः प्राधान्येन यौगिकः, शब्दार्थसङ्केतस्वरूपम्

२३ अस्माभिरत्र विशिष्टेऽर्थे सङ्केतपदप्रयोगः, आयुर्घृतमित्यादाविव अश्वादीनां बलादिलक्षकत्वं प्रतिपाद्य, बाह्योर्थः अन्तरर्थस्य सङ्केतभूत इति प्रतिपादनम् ॥

२४–२५ बहिर्यागोऽपि सङ्केतभूतोऽन्तर्यजनस्य । ऋत्विग्-यजमान-यजन-तत्फलानां स्वरूपविचारः । होत्रादीनां ऋत्विजां घृतादिद्रव्याणां गवाश्वादिफलानां च अन्तरर्थोपपादनम् ॥

२६ भूरादिसमव्याहृत्युपन्यासः । तत्र भूमिरन्तरिक्षं द्यौरिति त्रैलोक्यविभाग आर्ष इति प्रतिपाद्य, आन्तरस्य त्रिकस्य सङ्केतभूतं बाह्यं त्रिकमिति प्रतिपादनम् ॥

२७–२८ ब्रह्माण्डाधिकारिकाणां देवानां तत्त्वं (स्थूलपक्षे बाह्ये, आन्तरे सूक्ष्मपक्षे च) उपन्यस्तम् । अग्निस्वरूपवर्णनम्–तथा इन्द्रादीनां स्वरूपस्य विवरणम् ॥

२९ सोमादीनां तत्त्वम् ॥

३० रहस्यार्थदर्शि-श्रीचरणानां वाक्यानुवादेन प्रथमखण्डोपसंहारः ॥

## द्वितीयः खण्डः (पुट ३१–५२)

३१ "आधुनिक-नव्यविद्याविचार-संस्कारायत्त-विपक्षाक्षेप-समाध्युपन्यासमुखेन वेदगूढार्थसिद्धान्तपक्षः प्रतिपादितः प्रथमे खण्डे । अत्र स्वपक्षस्य परीक्षा चिरन्तनभारतीयपाण्डित्यदृष्ट्या प्रवर्तत" इति प्रतिज्ञा ॥

३१ कुत ऋग्वेद एव विचार्यते?

३२ ऋग्वेदः ॥

३३ ब्राह्मणानां उद्देशः, कृष्णयजुःसंहिता, याज्ञवल्क्यस्य नाभिमतः संहितायां ब्राह्मणान्तर्भावः ॥

३४ ऋग्वेदमात्रविचारस्यावश्यकता ॥

३५ त्रयीपदार्थविचारपूर्वकं त्रयीदेवानां ऋत्विग्भूतानां अग्न्यादीनामुल्लेखनं, तेन अन्तर्यजनार्थोपपादनम् ॥

३५ धर्ममीमांसा ॥

३६–३७ धर्मस्वरूपम्– यज्ञो बाह्यः एकदेशीयः, गीतोक्तलक्षणो यागः सार्वलौकिकः ॥

३८ गीतोपदेशात्प्राक् परं च प्रमाणग्रन्थेभ्यः यागस्य रहस्यार्थपरत्वं उपपादितम् ॥

३९–४० 'पूर्वतन्त्रविदां सूक्ष्मविचारविवादवैदग्ध्यं सर्वपण्डितमण्डलीसम्मानितमिति नात्युक्तिः' इति प्रारभ्य 'बबरः प्रावाहणिः' इत्यादौ मीमांसकैः गौणवृत्त्याश्रयणं साध्वपि, तेषां ब्रह्माण्डनिर्माणप्रायेण प्रयासेन 'पर्वतो रन्ध्रितः मूषको लब्धः' इति लोकोक्तेर्निदर्शनभूतं अल्पमरसं वा फलं सम्पादितमिति निरूपणम् ॥

४०–४३ मन्त्रः, तत्स्वरूपं, तत्प्रतिपादितो विषयः, तत्प्रयोजनानि- तदुत्पत्त्यनुत्पत्तिविचारः- वेदस्य नित्यत्व-कृतकत्वयोर्विरोधपरिहारः, पातञ्जलमहाभाष्यपङ्क्त्यर्थविमर्शः ॥

४३ तपस ऋते दुरवगाहो मन्त्र इति प्रमाणपूर्वकं उपपादनम् । निरुक्तबृहद्देवताकाराणां वचनोदाहरणम् । श्रद्धया ज्ञानपूर्वकमनुष्ठितस्यैव कर्मणः फलम्, नान्यथेत्युपपादनम् ॥

४४ बाह्यपक्षे, उच्चावचैरभिप्रायैःऋषीणां मन्त्रदृष्टयो भवन्तीत्युक्तिर्युक्ताऽपि, नैव अन्तरर्थबाधिका भवतीति प्रतिपादनम् ॥

" ऋचः प्रमाणं वेदरहस्यविषये—

४५ तपोनिष्ठानां ऋषीणां देवताभिः सह व्यवहारे तदर्थप्रकाशने च रहस्यभाषाव्यवस्थापितेति निर्णयाय मन्त्रदृष्टिष्वेव प्रमाणं द्रष्टव्यं इति प्रारभ्य ऋग्वेदसंहितायां रहस्यपदार्थप्रसक्तिपरीक्षापुरस्सरं 'निण्य' पदार्थप्रतिपादनम् ॥

४६–४८ सर्वाणि निण्यपदप्रयोगस्थलानि परीक्ष्य ऋचामुदाहरणेन वेदभाषायां 'निण्यं'

४९ रहस्यं प्रतिपादितम् । गुहा, अपीच्यं, प्रतीच्यं इत्यादीनि रहस्यपदार्थत्वेन स्तोत्रपर्यायनामपदविशेषणतया प्रयुक्तानीति मन्त्रोदाहरणपूर्वकं प्रदर्शितम् ॥

" केनोपायेन रहस्यमाच्छादितमिति प्रश्नमुत्थाप्य, बाह्याभ्यन्तरार्थद्वयवता शब्देन घृतादिना, सङ्केतरूपेण गवाश्वादिना चेति निरूपणम् ॥

५० ऋत-केतु-क्रतु-घृतादिपदानां अर्थनिर्णयः एकरीत्या सर्वत्र तेषां अर्थावगतिः गूढार्थपक्षानुसारस्य सौलभ्यमावहतीति प्रतिपादनम् ॥

५१ वेदे सङ्केतरूपाणां प्रयोगस्य निदानविचारपूर्वकं सङ्केतार्थ-समालम्बः वेदगुप्तार्थसिद्धान्त इति प्रतिपादनम् ॥

५२ नैकविधानां सङ्केतानां स्वरूपोल्लेखनम् ॥

## तृतीयः खण्डः (पुट ५२–६७)

५३ वसिष्ठ-वामदेवादीनां मन्त्रदृष्टय एव वेदगूढार्थसिद्धान्तस्य प्रधानं प्रमाणमिति द्वितीये खण्डे निरूपितम् । मन्त्रवर्णेभ्योऽन्यत्र वेदगूढार्थसिद्धान्तं सूचयन्ति प्रोद्बलयन्ति वा प्रमाणानि प्रदर्शितानि । तत्र प्रथमं वैदिकपदानां यौगिकत्वं प्रतिपादयतो यास्कस्य ऋषि-मन्त्र-देवतादीन्यधिकृत्याभिप्राया उपन्यस्ताः ॥

५४ गौणवृत्त्याश्रयणमवश्यमिति यास्कीयाशयस्य विचारः, तत्फलं च । दुरूहो वेदार्थबोधः तथा दैवतनिर्णयश्चेति तदीयमतम्, तस्य विमर्शः । वेदार्थ-निर्णयोपयोगाय तदानींतनपक्षान्तरीयवादोदाहरणेन बहुप्रकारो मन्त्रार्थ-व्याहार आसीदेकदेति कथनम् ॥

५५ मन्त्रार्थदुरूहत्वप्रतिपादनाय यास्कोदाहृतऋग्द्वयम् । तस्य व्याख्यानम् । तेन त्रिविधं वेदार्थपरिज्ञानं यास्काभिमतमित्युपपादनम् ॥

५५ उपदेशेन साक्षात्कृतधर्माण ऋषयोऽवरेभ्यः पुरा मन्त्रान् सम्प्रादुरिति यास्कोक्तिनिरीक्षणम् । स्थूलमर्थं व्याचक्षाणोऽपि यास्को मन्त्रार्थविचारे अध्यात्मपक्षपारम्यमभ्युपगच्छतीत्युपपादनम् ॥

५६ नासौ सतृणाभ्यवहारी न वा विशृङ्खल इति यास्कमधिकृत्य निरूप्य, वेदे रहस्यमस्तीति तस्यासीन्मतिरिति प्रतिपादनम् ॥

५७ पञ्चजनचर्चायां बृहद्देवताश्लोकोदाहरणेन निरुक्तकारवद् बृहद्देवताऽपि अध्यात्मादिरहस्यमस्ति वेद इत्याहेति कथनम् ॥

५८ ब्राह्मणान्यपि 'यजमानो वै यूपः' इत्यादिवाक्यैः यज्ञस्य सङ्केतरूपतां प्रति-पादयन्तीति स्मारयित्वा, ऐतरेय-शतपथब्राह्मणवाक्योदाहरणेन कर्मकाण्ड-ग्रन्थेष्वपि वेदरहस्यप्रतिपत्तिरसन्दिग्धेति स्वमतदृढीकरणम् । उपनिषत्सु 'तदृचाऽभ्युक्तम्', इत्यादिवाक्यस्य तात्पर्यविचारः । क्वचिन्मन्त्रवर्णमूल-कानि उपनिषद्वाक्यानीति प्रतिपादनाय निदर्शनं दत्तम् ॥

५९–६० 'हिरण्मयेन पात्रेण' इत्यादीशावास्योपनिषत्पङ्क्तीनां 'ऋतेन ऋतमपिहितम्' इति पञ्चममण्डलीय-मन्त्रदृष्टेश्च समानोऽर्थ इति व्याख्यानपूर्वकं उप-पादनम् । इतश्च वेदे रहस्यमस्तीति निरूपितम् ॥

६१ महाभारतमपि वेदगुप्तार्थ-सङ्केतरहस्यमतं प्रोद्बलयतीति प्रमाणं दत्तम् ॥

६२–६५ सायणभाष्यात् प्रागपि आचार्यश्रीमदानन्दतीर्थीयं चत्वारिंशत्सूक्तभाष्यं परमपुरुषार्थभूतविष्णुपदप्राप्तिरूपवेदप्रयोजनप्रतिपादकं आसीदित्युपन्यस्तम् । 'द्विविधा ह्यग्न्यादिशब्दाः' इत्यारभ्य मन्त्रार्थमञ्जरीवाक्यान्युदाहृत्य श्रीमद्-

राघवेन्द्रस्वामिनां 'अग्निमीळे' सूक्तव्याख्यानं प्रकारोपप्रदर्शनाय दत्तम् ॥

६५– वैदिकसमयधर्मादिविषयेषु पाश्चात्यानां मतभेदानुपन्यस्य अस्माकमुपादेयं
६७ सारमुक्त्वा, 'तपसा पारमीप्सितव्यम्' इत्युपसंहारः ॥

## चतुर्थः खण्डः (पुट ६७–८३)

६७ देवतामीमांसा– तत्र पाश्चात्यविदुषां प्राच्यविदुषां गूढार्थसिद्धान्तिनां च मतविवेकः । अन्तर्बहिश्च देवानामधिकारं पश्यतो गूढार्थसिद्धान्तस्य अर्थाविष्कारनये सर्वत्र अन्तरर्थस्य प्राधान्यं प्रतिपाद्य, चेतना एव देवा न जडा इति बहुदैवतमन्त्रवर्णोदाहरणेन निरूपणम् । स्थूलार्थपक्षे पर्य-
६८ वसन्नोऽर्थः सर्वत्र नोपपद्यत इति निरूपणाय सौरमन्त्रार्थविचारः ॥

,, ऐन्द्रमन्त्रोदाहरणम् ॥

६९ मरुतः सोमं चाधिकृत्य अन्तरर्थोपपत्तिः, बाह्यार्थासङ्गतिश्च ॥

७०– उषसमधिकृत्य विचारः । एकस्यैव परस्य देवस्य सर्वे देवाः नामानि
७१ इत्यादि तत्त्वं बहुभ्यो मण्डलेभ्यो मन्त्रोदाहरणेन प्रतिपादितम् ॥

७२ एकं सदेव सर्वेऽपि देवाः, येषामेकैकोऽपि स्वसदृशं साहाय्यं विनियुज्य यजमानं तदेकं परं ज्योतिरमृतं प्रापयतीति प्रतिपादनाय बहुदैवत्यमन्त्रोदाहरणम् । अथ देवानामेकमूलत्वं एकात्मत्वं एकलक्ष्यत्वं चेति उपन्यस्य, तेषां पृथक्त्वं नामतो व्यापारतो व्यक्तितश्चेति प्रतिपादनम् ॥

७३ देवानां द्विजन्मत्वोपपादनम् ॥

७४ अग्निस्वरूपविचारः ॥

७४– सप्तकपदार्थः, अग्नेर्व्यपदेशाः, 'गुहा हितः' मन्त्रवर्णोदाहरणेन तात्पर्य-
७५ कथनम्, 'मर्त्येष्वमर्त्यः, अमृतः' मन्त्रोदाहरणेन सारांशकथनम्, अग्नेः हृदयान्तर्निवासः- मन्त्रोदाहरणम्, पराशर-विश्वामित्र-वामदेवानां वाग्भिः प्रमाणीकरणम् ॥

७६ अग्नेः सप्तकसम्बन्धित्वोपपादनम् ॥

७६-७७ वैश्वामित्रस्य आग्नेयसूक्तस्य विमर्शद्वारा अश्वादीनां सङ्केतरूपस्य दृढीकरणम् ॥

७८-७९- यो वेदेऽग्निः कुमारः कीर्तितः स एवाग्निजः स्कन्दः पुराणे, अद्भुताख्योऽ
८१ ग्निः महाभारते, इत्युपपादनाय ऋक्संहितायां अद्भुतपदप्रयोगस्थलानि परीक्ष्य, अग्निरेवाद्भुतो वेदे इति निरूपितम् ॥

८२ प्रसक्तस्याग्निस्वरूपविचारस्य अनुप्रसक्त्या पौराणिकस्कन्दकथामूलपरीक्षणेन वेदभाषायाः सङ्केतरूपगूढार्थत्वं दृढीकृतम् ॥

,, गूढार्थप्राधान्येऽपि कर्मोपयोगितया व्यवस्थितानां ऋचां पदार्थविचारे गवाश्वादीनि साङ्केतिकपदानि अपरिहार्यैव अन्तरर्थानुसारि-तात्पर्यपरिग्रहे
८३ व्यवसायः कार्य इत्युपपाद्य, अयं रहस्यार्थविचारो जिज्ञासूनां कर्मबद्ध-श्रद्धानामप्युपकारकः स्यादित्याशंसयोपसंहारः ॥



# ऋग्वेदसंहिता

## पदपाठसहिता सभाष्या

आदिमे शतार्चिनां मण्डले चतुर्विंशत्यनुवाकाः । तत्र आद्यानुवाकत्रयस्य अन्तिमं द्वादशं सूक्तमन्तरा वैश्वामित्रो मधुच्छन्दा ऋषिः । द्वादशस्य सूक्तस्य तु माधुच्छन्दसो मेता । 'अग्निमीळे' इत्यारभ्य 'गायन्ति त्वा' इत्यतः प्राक् सूक्तनवकं गायत्रीच्छन्दस्कं, सूक्तत्रयात्मकस्य प्रथमानुवाकस्य आदिमं अग्निदेवताकं 'अग्निमीळे' इति नवर्चं सूक्तम् । तत्र नवानामृचामियं प्रथमा भवति—

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥१॥

अग्निं ईळे पुरःऽहितं यज्ञस्य देवम् ऋत्विजम् । होतारम् रत्नऽधातमम् ॥

**अग्निं** अग्निनामकं (देवं) **ईळे** अध्येषणीयत्वेन स्तौमि । कीदृशम्? **पुरोहितं** पुरस्तात् निहितं कार्यनिर्वाहाय, पुनः कीदृशम्? **यज्ञस्य देवं ऋत्विजं** देवतासम्भावनार्थं अनुष्ठीयमानस्य यागस्य निर्वर्तने यो देव एव ऋत्विग्भूतः तम् । पुनश्च कीदृशम्? **होतारम्** ह्वातारं सामर्थ्याद्देवानाम् । पुनरपि कथंभूतम्? **रत्नधातमम्** रमणीयानां रत्नानां अतिशयेन धारकम् ॥

अग्निपदं बहुधा निर्ब्रुवते नैरुक्ताः । तेषां निर्वचनानां परीक्षणे स्पष्टमिदमवगम्यते, यत् ब्राह्मणवाक्यबलात्कयाचिद्विधया अग्निस्वरूपमाकलय्य निर्वचनानि विकल्पतो दृष्टानीति । 'स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नाम' इत्यादि ब्राह्मणवाक्यानि 'अग्रणीः' इत्यादि निर्वचनस्य मूलमिति ज्ञायते । वैयाकरणपक्षे अङ्गतेर्धातोर्निष्पन्नं अग्निपदम् । 'अङ्गेर्नलोपश्च' इत्युणादिसूत्रमुदाहरन्ति । अङ्गति गच्छति उर्ध्वं, हविः स्वर्गं नेतुमिति वा व्युत्पत्तिमाचक्षते । प्राचीन-आर्य-भाषाशास्त्रीयानां अग्न्यर्थकधातूनां परीक्षणे बलवद्दीप्तिमद्गतिरवयवार्थो भवति । एवं च सङ्गच्छन्ते अग्निधर्मप्रतिपादकाः शब्दा इति बोध्यम् ॥

ईळे - स्तौमीति सायणः, याचामीति यास्कः । धातूनां बह्वर्थत्वे न विवादः । ईळतिर्याच्ञाकर्मा अध्येषणाकर्मा पूजाकर्मा वेति यास्कः । अग्निस्वरूप-तदधिकार-तन्नि-र्वाहापेक्षया अध्येषणाकर्मेत्युपपन्नतमम् । अध्येषणा अधिका एषणा प्रेरणा भवति । पूज्यस्य पुरोहितस्य अग्नेर्देवस्य वा सत्कारपूर्वकं कर्तव्यविशेषेषु नियोजनं अध्येषणेति उच्यते । ईळे अध्येषे ॥

पुरोहितम्– यजनकर्म-निर्वाहाय यजमानस्य पुरस्तादग्रे निहितः अग्निः । अत एव तं ऋषिरन्तर्यागे, यजमानो बहिर्यागे अध्येषते । एवं चोपपद्यते ईळतिरध्येषणार्थः । पुरोहितम्- 'पुर एनं दधते' इत्याम्नायश्च सङ्गच्छते । 'यज्ञस्य पुरोहितम्' 'होतारं देवम् ऋत्विजम्' 'रत्नधातमम्' इति व्याख्यातॄणामन्वयः नावश्यकः न च समीचीन इति द्रष्टव्यम् । पादशः अन्वयस्य सम्भवे सति, पादान्तरस्थपदैः पादान्तरस्थपदानां योजना न ऋज्वी । तस्माद् 'यज्ञस्य देवं ऋत्विजं' इति पादो व्याख्यातः ॥

होतारम्– स्वयं देवः सन् अन्यान् यज्ञे समुपस्थितान् कर्तुं आह्वयति । एवं आह्वानप्रभुरग्निः ॥

रत्नधातमम्– रमेर्धातोः औणादिक-क्न-प्रत्ययान्तं रत्नपदमिति सर्वेषामभिमतम् । 'रत्नं सुखं धत्त इति रत्नधा अतिशयेन रत्नधास्तम्' इति मन्त्रार्थमञ्जरीनिर्वचनं अन्त-र्यागपराणां नः सम्मतम् । अन्तर्यजने प्रवृत्तस्य ऋषेर्यजमानस्य अर्पणानां फलभूताः रत्नपदवाच्या या रतयः तासां धारकः प्रतिष्ठापकः अग्निरेव भवतीत्यन्तरर्थः । बहि-र्यागात् नान्यदस्तीति वादिनां पक्षे, रत्नं धनं यागफलभूतं गवाश्वादिकं तस्यातिशयेन दाता अग्निः तं, इति ॥

इदं च ऋचस्तात्पर्यं भवति– 'यो यज्ञस्य निर्वोढा अग्रणीः पुरोहितः, यश्च काले कर्तव्यस्य यज्ञस्य कर्ता कारयिता च ऋत्विग्भूतो देवः, यो देवान् यज्ञे सन्निधापयितुं प्रभवन् तेषामाह्वाता, यः पुनर्यजमाने प्रहर्षातिशयानां आधायकः तमग्निं अध्येषणीयं अभिकाङ्क्षामि' इति ॥

अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त । स दे॒वाँ एह व॑क्षति ॥२॥

अ॒ग्निः पूर्वे॑भिः ऋषि॑भिः ईड्यः॒ नूत॑नैः उ॒त । सः दे॒वान् आ इ॒ह व॒क्ष॒ति ॥

**अग्निः** पूर्वोक्तः पुरोहितत्वादियोग्यताविशिष्टः देवः, **पूर्वेभिः** पुरातनैः **ऋषिभिः** मन्त्रद्रष्टृभिः भृग्वङ्गिरःप्रभृतिभिः **ईड्यः** स्तुत्यः पूज्यः अभिकाङ्क्षणीय इति यावत्, **नूतनैः उत** नवैः ऋषिभिरपि ईड्यः । **सः** य एवमीड्य उक्तः स देवः **देवान्** इतरान् इन्द्रादीन्, **इह** अस्मिन् यज्ञ **आवक्षति** आवहति । इह अस्मिन् जगतीति वा इति स्कन्दस्वामी । द्युस्थानान् देवान् पृथिवीस्थानमानयति पृथिवीस्थानोऽग्निरिति भावः । अन्तर्यजने सुगमो भावः । अशक्यः कालनिर्णयः पूर्वेषां अङ्गिरःप्रभृतीनाम् । मधुच्छन्दा इव तत्समकालिकाः सूक्तकृत ऋषयोऽन्ये च आसन् इति गम्यते 'नूतनैरुत' इत्युक्तेः । अतिचिरन्तना दृष्टफलका रूढमूला च अग्नेरुपास्तिः इत्याचारबलं च द्योत्यते ॥

**अ॒ग्निना॑ र॒यिम॑श्नव॒त् पोष॑मे॒व दि॒वे दि॑वे । य॒शसं॑ वी॒रव॑त्तमम् ॥३॥**

**अ॒ग्निना॑ र॒यिम् अ॒श्न॒व॒त् पोष॑म् एव दि॒वे दि॑वे । य॒शस॑ं वी॒रव॑त्ऽतमम् ॥**

**अग्निना** देवेन निमित्तभूतेन **रयिम्** धनं किमप्यान्तरं न केवलं बाह्यं **अश्नवत्** प्राप्नोति यजमानः । कीदृशम् रयिम्? **दिवे दिवे** अनुदिनं **पोषमेव** पोषोपेतमेव पुष्यमाणं न कदाऽपि क्षीयमाणम् । पुनः कीदृशम्? **यशसम्** यशोयुक्तं वैभवसम्पन्नम् । **वीरवत्तमम्** अतिशयेन वीरबलोपेतं च रयिं अश्नवदिति सम्बन्धः ॥

अत्र पोषशब्दस्य घञन्तत्वाद्रयिविशेषणत्वेन न ग्राह्यमित्येकेषामाक्षेपः । पोषं पुष्टिं रयिं (धनं) च 'अश्नवत्' इत्याहुः । एवं चेत् समुच्चयार्थकश्चकारोऽध्याहार्यः । 'पोषमेव' इत्यत्र एवकारस्य प्रयोजनं अलक्षितं स्यात् । 'पोषं' 'यशसं' इत्युभयमपि मत्वर्थलक्षणया रयिविशेषणमिति बोध्यम् । एतादृशः प्रयोगः साधारणो वेदे । 'वपुषामिदेकम्' (४. ७. ९.), 'वपुषामपश्यम्' (५. ६२. १.) इत्यादिस्थलेषु वपुषां वपुष्मतां देवानां इति मत्वर्थलक्षणया व्याचक्षते पदार्थे व्याख्यातारः । साध्वेतत् । एवमिहापि लक्षणाश्रयणं साधु । वैभवद्योतनाय 'यशसं' इति रयिविशेषणम् । 'अश्नवत्' इति लेटि रूपं, तस्माल्लोडर्थो वक्तव्य इत्येके नव्याः । लडर्थ एवोपपन्नतरः, पूर्वेषां व्याख्यातॄणामभिमतश्च ॥

पूर्वोक्तलक्षणेन देवानामाह्वात्रा अग्निना तत्प्रसादमहिम्ना वैभवशालिनीं वीर्याति-

श्रयसम्पन्नां रयिपदवाच्यां अन्तस्समृद्धिं प्राप्नोति यजमान इति भावः ॥

अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वत॑ः परि॒भूरसि॑ । स इद्दे॒वेषु॑ गच्छति ॥४॥

अग्ने॑ यं य॒ज्ञं अ॒ध्व॒रम् वि॒श्वत॑ः परि॒ऽभूः असि॑ । सः इत् दे॒वेषु॑ ग॒च्छ॒ति॒ ॥

अग्ने त्वं यं अध्वरं अध्वगमनशीलं यज्ञं यागं विश्वतः सर्वतः परिभूः परिवृत्य भवन् असि स इत् स एव यज्ञः देवेषु देवानां मध्ये गच्छति गन्तव्यं स्थानम् ॥

अध्वरो हिंसारहित इति कर्मपराणां व्याख्यासरणिः । 'न हिंस्यात्सर्वभूतानि' इति धर्मशास्त्रस्य अपवादः पश्वालम्भो यज्ञे । ततोऽत्र हिंसा न दोषायेत्युपपादयितुं न ध्वरो हिंसा अस्मिन्निति अध्वरपदं निष्पादयन्ति बाह्यार्थपक्षीयाः । यज्ञः पुरुषाकारतया वर्ण्यते वेदे । स च द्रव्यत्यागापरपर्यायः सर्वस्वार्पणरूपो यजमानस्यान्तराविर्भूय प्रतिष्ठत ऊर्ध्वं स्वर्लोकं प्रति देवानधिगन्तुम् । तस्मात् स प्रयाणं करोति, अध्वानं राति ददाति यजमानस्योर्ध्वगत्यै । तथाविधस्य यज्ञस्य यात्रायां सर्वतः पापेभ्यो राक्षसादिभ्यो रक्षणं अग्नेरेव सम्भवति । तस्माद् यो यज्ञोऽग्निना परिरक्षितः स एव देवान् प्राप्नोतीत्युक्तम् ॥

अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒राग॑मत् ॥५॥

अ॒ग्निः होता॑ क॒विऽक्र॑तुः स॒त्यः चि॒त्रश्र॑वःऽतमः । दे॒वः दे॒वेभि॑ः आ ग॒म॒त् ॥

अग्निः स्वयं देवः देवेभिः अन्यैर्देवैः सह आगमत् आगच्छतु । अग्नेः चत्वारि विशेषणानि । होता आह्वाता देवानाम्, कविक्रतुः कविर्मेधाविनाम, क्रान्तदर्शी अतीन्द्रियार्थदर्शी कविरिति वेदे । एवमेव सायणव्याख्या बहुत्र । क्रतुः प्रज्ञा कर्म वा यथासन्दर्भं व्याख्यायते कर्मठैः । कर्मकरणसामर्थ्यवत् अध्यवसायात्मकं प्राज्ञं बलं निष्प्रकम्पसङ्कल्पो वा क्रतुरिति ज्ञेयम् । एवं कविक्रतुः अतीन्द्रियार्थदर्शी प्राज्ञसङ्कल्प इच्छाबलं वेति वेद्यम् । सत्यः दर्शने प्राज्ञकर्मणि स्वरूपतोऽपि सत्यः अनृतैरभिघातः सम्पर्को वा नास्त्यस्य, अतो न व्यभिचरति दर्शनादिकर्तव्येषु । चित्रश्रवस्तमः श्रव इति कीर्तिनाम, तथा बाह्यार्थपक्षे ग्रहणं नासाधु । श्रवः-

श्रवणश्रुतिशब्दाः शृणोतेर्निष्पन्नाः समानमेवार्थं स्मारयन्ति । सर्वतः श्रूयमाणत्वादेव श्रवः कीर्तिरुच्यते । तस्मादत्र चित्रं अद्भुतं विविधं चायनीयं वा, श्रवः श्रवणं अस्य अग्नेरतिशयेनास्तीति पदार्थः । अतीन्द्रियार्थविचित्रश्रवणशाली भगवानग्निः स्वयं श्रुतिमान् उपासकं अद्भुताः श्रुतीः श्रावयितुं प्रभुरिति बोध्यम् ॥

इति प्रथमस्य प्रथमे प्रथमो वर्गः

यद॒ङ्ग दा॒शुषे॒ त्वमग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑ । तवेत्तत्स॒त्यम॑ङ्गिरः ॥६॥

यत् । अ॒ङ्ग । दा॒शुषे॑ । त्वं । अग्ने॑ । भ॒द्रं । क॒रि॒ष्यसि॑ । तव॑ । इत् । तत् । स॒त्यं । अ॒ङ्गि॒रः॒ ॥

अङ्ग! अग्ने! हे अग्ने दाशुषे दत्तवते यजमानाय त्वं यद् भद्रं कल्याणं करिष्यसि तवेत् तवैव तत् सत्यं हे अङ्गिरः एतन्नामक अग्ने ॥

अत्रायं सायणीयोऽभिप्रायो भवति, हविर्दत्तवते यजमानाय पशुप्रजादिरूपं धनं अग्निर्ददाति । तदेव कल्याणं भद्रशब्देनोक्तम् । तथा लब्धेन धनेन साधनेन पुनरग्निं यजते यजमानः । तस्मादग्नेरेव तत् 'तवेत्तत्' । सत्यं न विसंवादोऽत्र । रमणीयार्थेऽस्मिन् मन्त्रे अग्नेः सत्यं किमपि स्वच्छमुक्तं लक्ष्यते, व्याख्यातृभिर्महाननर्थः कृतः । 'दाशुषे' दत्तवते 'यद्भद्रं करिष्यसि' 'तत्सत्यं' तवैव 'तवेत्' इति साधीयान् ऋजुः अन्वयः । तर्हि अयमाशयः । अग्निना यजमानाय करिष्यमाणं भद्रं अग्नेरेव सत्यम् । किं तद्भद्रं यदग्नेरेव सत्यं उच्यते? प्रजाः पशवो वित्तं गृहा इतीदं सर्वं भद्रमिति ब्राह्मणवाक्यबलेन प्रतिपादयन्ति । भवतु प्रजापश्वादि कल्याणम् । मास्तु विवादः । ऋग्वेदे भद्रपदं सत्यसम्बन्धि किमपि विशिष्टं कल्याणं द्योतयतीति न संशयः । 'विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्न आसुव ॥' 'परा दुष्वप्न्यं सुव' (५. ८२. ४, ५) इत्यादौ दुःष्वप्न्यदुरितप्रतिद्वन्द्वित्वेन भद्रपदं प्रयुज्यते । अनृतज्ञानजन्यदुर्गतानामन्तकं भद्रपदवाच्यं कल्याणमेव अग्नेः सत्यमिति तात्पर्यपरिग्रहे, पूर्वस्यां ऋचि अग्नेः सत्यविशेषणं, अत्र तथाविधं भद्रं अग्नेरेव सत्यं इति प्रतिपादनं च उपपद्येते । तस्मान्नेह कल्याणसामान्यं विवक्षितम् । अनृतप्रज्ञापरिपन्थिकल्याणं सत्यं अग्नेरेव तत्त्वं स्वभावो वेति बोध्यम् । सर्वथा भद्रपदं अशुभ-अनृतज्ञानजन्य-दुरितप्रतिद्वन्द्वित्वेन प्रयुज्यते वेदे । दुःस्वप्नप्रयुक्ताच्च इदमवगम्यते, यत्र पापदेवताया

निर्ऋतेर्विरोधितया 'भद्रं वरं वृणते' (१०. १६४.) इत्यादि गीयते । ये भद्रं दूषयन्ति ते निर्ऋतेरन्तिके क्षिप्यन्त इत्यर्थको मन्त्रश्च अन्यत्र श्रूयते— 'ये वा भद्रं दूषयन्ति स्वधाभिः । अहये तान् प्रददातु सोमः आ वा दधातु निर्ऋतेरुपस्थे ॥' (७. १०४. ९.) अपि च, अग्नेः स्वावासभूत-ऋतपदवाच्यस्य बृहतः सत्यस्य विशेषणतया, मनसः क्रतोश्च प्राप्यत्वेन च 'भद्रं' कीर्त्यते । 'भद्रं मनः कृणुष्व' (४. ११. २०.) 'भद्रं नो अपि वातय मनो दक्षमुतक्रतुम्' (१०. २५. १.) 'आ भन्दिष्टस्य सुमतिं चिकिद्धि बृहत्ते अग्ने महि शर्म भद्रम्' (५. १. १०,— इत्येवंजातीयको मन्त्रवर्णः कल्याणपर्यायत्वेऽपि भद्रस्य वैशिष्ट्यं द्योतयतीत्यवधार्यम् । आङ्गिरसस्य कुत्सस्य मन्त्रदृष्टिरपि 'यदङ्ग दाशुषे' इत्यस्या ऋचोऽस्माभिरुक्तमर्थं दृढीकरोति । सेयं भवति— 'तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुता जरसे मृळयत्तमः । दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मारिषामा वयं तव' (१. ९४. १४.) । पुरस्तात् 'राजन्तं' इति मन्त्रस्य अर्थावगाहने स्मरणीयेयं कुत्सस्य ऋक् ॥

उप॑ त्वाग्ने दि॒वे दि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् । नमो॒ भर॑न्त॒ एम॑सि ॥७॥
उप॑ त्वा॒ अ॒ग्ने॒ दि॒वेऽदि॑वे दोषा॑ऽवस्तः धि॒या व॒यम् । नम॑ः भर॑न्तः आ इ॒म॒सि॒ ॥

हे अग्ने त्वा त्वां दिवे दिवे प्रत्यहं दोषावस्तः नक्तं-दिवं वयं धिया धारणसमर्थया बुद्ध्या नमः प्रणतिं भरन्तः बिभ्रतः सन्तः उपेमसि उपगच्छामः उपास्महे इत्यर्थः । अत्रैके 'दोषावस्ता' रात्रेराच्छादकः स्वप्रकाशेन अग्निः, तस्य सम्बोधनं 'दोषावस्तः' इत्याहुः । वस्तुतस्तु दोषा रात्रिवाची तेन तमो लक्ष्यते, वस्तः दिनवाची तेन प्रकाशो लक्ष्यते । तमसि प्रकाशे वा सर्वास्ववस्थासु प्रत्यहमविरतं त्वामुपास्महे इति भावः । 'एवं नमो भरन्तो वयम्' इत्युपपद्यते । प्रणतिभारधारण-सामर्थ्यं धियो वर्तते । तस्माद्ध्यानदृढा धीरेवात्र साधनं अनुदिनमविच्छेदं अन्तःप्रकाशे अप्रकाशे वा सर्वासु दशास्वग्न्युपास्तेरिति बोध्यम् ॥

राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम् । वर्ध॑मानं॒ स्वे दमे॑ ॥८॥
राज॑न्तम् अ॒ध्व॒राणा॑म् गो॒पाम् ऋ॒तस्य॑ दीदि॑विम् । वर्ध॑मानम् स्वे दमे॑ ॥

